* ॐ *

कवितार्किकचक्रचूडामणिश्रीश्रीहर्षप्रणीतस्य

# खण्डनखण्डखाद्यस्य

## शारदाख्यव्याख्यायाः

शङ्करचैतन्यभारतीरचितायाः

स्वोपज्ञं

## राजहंसनामकं मानसोन्मीलनम्

स्वयमेव सम्पादितम्

—○—

तच्च
वाराणस्यां
'अपारनाथमठसन्न्यासिसंस्कृतकालेज' इत्यतः
श्रीधर्मानन्दस्वामिना प्रकाशितम् ।

'सात्विनायक—वणिक् प्रेस' इत्यतस्तु मुद्रणं प्राप्तम् ।

( सं० २००५ ) ( सन् १९४८ ) मूल्यम् १॥)

[ ...नर्मुद्रणाधिकारोऽस्य निर्मातुरनुमत्यायत्तः ]

❀ ॐ ❀

# खण्डनशारदाया राजहंसस्य

## विषयानुक्रमः

ॐ

नमः परमात्मने

# खण्डनखण्डखाद्यस्थश्रीशारदायाः श्रीराजहंसो नाम मानसोन्मीलनम्

## प्रथमः परिच्छेदः

चित्तविलोपे प्राप्ये नवेन्दुमौलिप्रिये कलोल्लसिते[1] ।
त्वत्पदपद्मपरागोऽपरागतां[2] नयतु मां मातः ! ॥ १ ॥

हित्वा मोहं मलिननिवहे हेयताऽऽदेयते च
नीत्वा सीमां परिचितजनं शून्यताया अदृश्याम् ।
यावद्दृष्टिः पतति तृषिता त्रैपुरे पादपद्मे
तावत्काचिद्गलितमनसः शून्यता मे प्रियाऽस्तु ॥ २ ॥

व्यवहारकथातीते शिवे शान्तरसात्मनि ।
विलोप्य लीलया कालं निर्दिताम्-सततं सुमः ॥ ३ ॥

अन्यथा प्रतिपद्यापि जायन्तेऽवद्यदर्शिनः ।
इत्यवेत्य क्वचिद्भावः स्वयमेव विभाव्यते ॥ ४ ॥

यद्वा किमेतया भीत्या मध्यमानां बुधां कृते ।
क्वचिद् व्याख्यानयत्नोऽयं चिरायास्तु फलेग्रहिः ॥ ५ ॥

नेत्रं तृतीयमुन्मील्य चिदाकाशे कृतोत्सवैः ।
श्रीशारदेङ्गितं ज्ञातुं राजहंसो निषेव्यताम् ॥ ६ ॥

अल्पज्ञता वा सकलज्ञता वा स्वस्मिन्नवेद्या परदोषवक्त्रा ।
आद्येऽप्रमा स्यान्ननु दोषदृष्टिरन्त्ये तु विश्वेश्वरताप्रसक्तिः ॥ ७ ॥

---

१—कलाभिः = शक्तिभिः, विश्वकलनया, चन्द्रकलया । २—रागशून्यताम् ।

# खण्डनमङ्गलशारदायां राजहंसः

मूलपृष्ठम् १—परापरेति । अत्रैकशेषेण परापरञ्च परापरञ्चेति विभागद्वयायत्तेन परपरापरापरेति शब्दैरागमिकेषु प्रथितं शिवशक्तिनरात्मकं व्युत्क्रमेण परं क्षराक्षरपुरुषोत्तमेति गीतास्वपि त्रिभुवनानिबन्धनबन्धुनाभिहितं तत्त्वत्रयमप्यभिधित्सितम्। औपनिषदरीत्या तु परापरब्रह्मात्मको विभागः सुविदित एव। परा न परविभागगेत्यर्थे तु विरोधाभासोऽपि, परा=अपकर्षानाश्रयत्ववतीत्येवं च तत्परिहारः। सकलचितिपरतयापि चेदं पद्यं शक्यं योजयितुम्। तथाहि-परापरविभा मायिकोत्कर्षापकर्षाश्रयनैकविधलीलाविग्रहात्मना प्रथनात्। अगगा=कैलासस्था, पुत्रीत्वेन पर्वतविशेषगामिनीति वा। स्वेन जनितस्य नन्दितस्य=स्वात्मकशक्त्यावेशितस्य 'अनन्तः केशवे शेषे' इत्यभिधानादनन्तस्य=केशवस्य धीः=बुद्ध्यधिष्ठात्री, ब्रह्मवैवर्तादौ तथा प्रसिद्धेः, ज्ञानशक्तिरेव वा, परदेवता हि शिवमिच्छाशक्तिरूपेण विष्णुं ज्ञानशक्तिरूपेण विधिञ्चाध्यास्ते क्रियाशक्तिरूपेणेत्यागमेषु बहुलमुपलब्धेः। परागतमलीमसेति निरतिशयसौन्दर्यमभिप्रैति। महामहाकविभिर्विरिञ्चादिभिरपि साक्षात्तदीयसौन्दर्यलवस्यापि निर्वक्तुमशक्यतयाऽन्यनिषेधमुखेन निरूपणाशयेन विगतेत्यादि। अनन्यसामान्यदशाया सदोदयमासादयन्तीति वा। अनवच्छिन्नसुखार्थमर्धनारीश्वरात्मना सङ्गतेत्याशयानस्य 'अखण्डे' त्याद्युक्तिः। सती चासावमृतात्मिका=अमृतरसस्यन्दितनुलता, सौवर्गामृतातिशायितात्प्रत्ययार्थं सत्त्वममृतस्यैव वा विशेषणम्, अत एव तत्सम्पर्कमात्रमवाप्नुवतो भगवतो भवस्य न कालकूटपानप्रयुक्तकार्यविशेषभागितेति भावः। अन्यभा=कमनीयकान्तिरित्यर्थः॥ १॥

परिलभ्य लिप्सितमिति। अत्र परीति साभिप्रायं श्रीसरस्वत्याः करुणातिशयं द्योतयति। लिप्सितं लब्ध्वेत्युक्त्या हि यावल्लिप्सितं तावल्लब्धमिति प्रतीत्या न करुणातिशयः प्रतीयते, परिलिप्सितं लब्ध्वेत्यत्र तु लाभे न्यूनतैव, यथास्थिते तु समीहिताधिकफललाभलाभेनोत्कर्ष इति॥ ३॥

न पञ्चमीति। अत्र निषेधपक्ष इव काकुपक्षोऽपि प्रतीयमानो ब्रह्मातिरिक्तांशे नापलप्य इत्यनिर्वाच्यत्वनिरुक्तिशारदायां द्रष्टव्यम्। स्वरूपभूतत्वमद्वयत्वं च पञ्चमकोट्याः सौगतबोधरीत्या। अपि वाऽधिष्ठानात्मना स्वरूपभूतामद्वयभूताञ्चेति स्वमतेनापि॥ ४॥

परे स्थिता इति। परत्वमुत्तमत्वम्, निरतिशयं च तद् ब्रह्मण्येवेति परपदेन ब्रह्म लब्धुं शक्यम्। किञ्च परेऽपि स्थिताः=उत्कृष्टा अपि मतान्तरगा अपि च सन्त इत्यर्थः। उत्कर्षस्य नियमेनावधिसापेक्षतया तदाश्रयपरतायामपि परशब्दस्य सर्वनामसंज्ञासंभवः, मतान्तरगामितैव वा परशब्देन प्रत्येतव्या॥ ६॥

पदप्रपन्ना इति। विन्यस्येत्यनेनान्वयः। ग्रन्थपक्षे शारदेतिपदं प्रपन्नाः, तद्बोध्यत्वात्, खण्डनग्रन्थस्य प्राचीनन्यायादिखण्डनपरस्य नव्यन्यायाद्यध्येतृदृष्ट्या प्रसक्तं शारं=दोषैः कर्बुरत्वं कालुष्यमिति यावत्, द्यति खण्डयतीति व्युत्पत्तेः। किञ्च खण्डनग्रन्थस्य हृदयं ददाति=प्रकाशयति, तस्मिन् स्फूर्तिं स्वातन्त्र्यं वा वितरतीति, शारदातिलकटीकायां हि 'शरः स्वतन्त्रं हृदयं स्फुरत्ता परमेशिता। शारश्चेत्युदिताः शब्दाः पर्यायाः' इत्यभिधान-

मुपन्यस्तम्। औचित्यात्स्वतन्त्रशब्देऽत्र भावप्रधानत्वमादृतम्। किञ्च मूलग्रन्थस्य द्रुहिणात्मनाऽध्यवसितस्य स्वोचितकार्यकारितायां साहाय्यविशेषप्रदातृतया तत्पत्नीत्वेनाध्यवसितेयं शारदेति व्याख्या निगद्यते। निरूपितश्चैतच्छ्लेषेण 'चिराय चायमोचितमाचरन्नि'त्यादिना भूमिकायाम्। मालापक्षे तु पदात्प्रपन्नाः, तन्निर्माल्यत्वात्। सत्तर्कपुष्पैरिति। तर्काणां कर्कशत्वेन कोमलिमातिरिक्तधर्म एव रूपकबीजसादृश्यघटकतया ग्राह्यः। मालात्मना सङ्कलनीयपुष्पत्वेन रूपणं तु ग्रन्थरचनापरिपाटीषु संकलनाकौशलस्यावश्यकत्वप्रतीतये। विकीर्णस्य संग्रहः, संक्षिप्तस्य विस्तरः, उक्तोपपादनम्, अन्यत्र सञ्चारितयुक्तेर्विषयान्तरे संचारः, लेखनकौशलमजानता लिखितस्य सौष्ठवेन लेखनम्, अनुक्तकथनञ्चेतिग्रन्थरचनाप्रकारेषु हि सङ्कलनाकौशलापगमे ग्रन्थस्योपहास्यतैव। अनुक्तत्वस्य तु क्वचिदर्थेऽनादौ प्रवाहे वक्तुमशक्यत्वेऽपि विद्वद्विशेषीयापूर्वत्वप्रकारकमत्यैव व्यवहारः। केनचिदुक्तार्थस्य तु प्रतिबिम्बं छायां चानादाय 'तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि। वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम्॥ अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी। नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यतीति ध्वन्यालोकोक्तरीत्यैव निबन्धनं स्वग्रन्थे कामनीयकमातनोति न त्वन्यथेति तु मन्तव्यम्॥

माहर्षेति। गङ्गाप्रवाहपक्षे महर्षेर्जह्नोरिदं माहर्षं जनुर्यस्येत्यर्थः। अपि वा मा श्रीः तद्धर्षो भगवान् पुरुषोत्तमः, तस्माज्जनुर्यस्येति। ग्रन्थपक्षे तु श्रीहर्षः प्रसिद्ध एव, मा = विद्या तां प्रचारैर्हर्षयति तया वा हृष्यतीत्येवमपि तत्पक्षे योजनीयम्। तुरीयचर्याचरणेति। तुरीयचर्या = चतुर्थाश्रमस्तदनुकूलाचरणेषु प्राक्तनमहात्मगतेषु चित्रं = द्वैतोदन्तोपशमनप्रयुक्तश्चमत्कारः, अतएव सकलक्लेशोपनिपातोपाधानात्ममतितिरस्कारेण खण्डनपदार्थो द्वैतोपशमावगम एव मिष्टभोज्यविशेषात्मकखण्डखाद्यात्मना रूप्यते, ग्रन्थे तादृशशब्दस्तूपचारात्। तुरीयचर्यानुकूलान्याचरणानि येषां महात्मनां तेषु, तदीयद्वैतोपशमोपदेश एवेषुः शरः, तत्प्रयुक्तं वा चित्रमिति वा व्याख्येयम्। तुरीयचर्या च रणेषु = उपस्थितत्वाद्वाक्सङ्गरेषु चित्रं च सन्दृश्यते तुरीयचर्याचरणेषु स्वीयेषु सत्स्विति चार्थस्तु सम्भवन्नपि विनयाननुरूपत्वात्त्याज्यः। प्रवाहपक्षे तु चित्रमिति व्यस्तमेव, उदके कुसुमकलापोपकल्पने हि चित्रत्वमनीषोन्मेषोऽनुभूतिमानित एव। सप्तम्यन्तस्य तु हरिहरद्रुहिणत्रितयोत्तीर्णतया तुरीयाचर्या = अवस्था यस्याः सा विश्वाम्बैव, तच्चरणेषु वसतेत्यवर्णलभ्यम्, वासः पुनर्वासनामात्रानुप्राणित इत्यन्यदित्यर्थः॥ ७—८॥

विश्वं दुष्टमिति। विश्वस्य त्रिगुणात्मकतया रजसा तमसाऽपि च स्वप्रभावस्य तत्रावश्यमाधेयत्वादिति भावः॥ ९॥

शिष्टतेति। शिष्टताव्यञ्जकत्वेन शिष्टाचारप्रमाणकत्वमुक्तम्। शमनीमिति। निवृत्तियोग्यामित्यर्थः। यद्यपि देवताप्रसादो मङ्गलफलम्, विघ्नात्यन्ताभावस्थलसाधारण्यात्, तेन हि सति विघ्ने तद्ध्वंसोऽसति तु प्रारिप्सितकृत्यौपयिकदृष्टकारणान्तरस्योपहारो वैशिष्ट्याधानं वा तत्र क्रियत इत्येव श्रद्धेयः सिद्धान्तः, तथापि विघ्ननिवृत्तियोग्यता सर्वत्र मङ्गलेऽर्गलतैवेति भावः। चरमजन्मनामपि च प्रवृत्तिरदृष्टफलमनुपार्जयन्त्यपि दृष्टफलोपार्जने

प्रभवत्येव, अतएव भगवत्कृष्णद्वैपायनप्रभृतीनां श्रीशुकादिपुत्रोत्पत्तये तपश्चरणस्मरणमुपपद्यत इति।

**स्तवनीमिति।** वचोव्यक्तिं विशेष्यतयाऽनुसन्धाय प्रयुक्तमिदं करणे ल्युटि ङीपि रूपम्।

मूल पृष्ठम् २—**संसर्गताख्यविषयत्वानिरूपकेति।** संयोगादिस्वरूपलक्षणवाक्यतोऽपि निर्विकल्पकबोधाभ्युपगमेन तत्साधारण्याय संसर्गाविषयकेति नोक्तम्।

**अनुपगम एवेति।** उक्तगौरवानुसन्धाननिष्णातस्येतित्वौचित्यप्राप्तम्। अन्यस्य त्वदुदितदिशा शक्तिभ्रमजन्य एव सप्रकारको बोधः, प्रमाणानां लघ्वर्थपक्षपातितायास्त्वयैव बाधदीधितावभिधानात्। तथा च गगनपदं विशिष्टवाचकं पदत्वात् पटादिपदवदित्यनुमाने नानाव्यक्तिवाचकत्वमुपाधिः, गगनपदं शक्त्या सप्रकारकबोधाधायकं पदत्वात्पटादिपदवदित्यत्र च विशिष्टशक्तत्वम्। शब्दो गगनपदशक्यतावच्छेदकः शक्तिभ्रमाप्रयोज्याया लक्षणाग्रहाप्रयोज्यायाश्च गगनपदजन्यशाब्दबोधीयप्रकारताया आश्रयत्वादित्यत्र तु शक्तिभ्रमाप्रयोज्यत्वं विशेषणमसिद्धम्। अन्यथाऽष्टद्रव्यातिरिक्तद्रव्यत्वेऽपि गगनपदशक्यतायास्तदवच्छेदकताया वा तव स्वीकारप्रसङ्गात्, लाघवपक्षपातस्य प्रमाणेष्ववहेलनादिति समुदायार्थः।

**न शाब्दबोधापत्तिरिति।** यद्यपि गगनमिति वाक्यस्य समानविभक्त्यन्तपदाघटितत्वेन न निर्विकल्पकबोधजनकत्वसम्भवः, न वोक्तबाधग्रहस्यापि निर्विकल्पकत्वम्, भेदविषयकत्वात्, एवं च स्मृतित्वे सप्रकारकत्वव्याप्तिभङ्गेऽपि न शाब्दत्वे तद्भङ्गः, न च गगनमितिवाक्यजबोधे सुबर्थैकत्वस्य प्रकारतया भानेऽपि विशेष्यस्य स्वरूपेण भाने तदंशे निर्विकल्पकत्वं निर्बाधम्, गवादिपदघटितवाक्यजबोधस्यापि गोत्वाद्यंशे निर्विकल्पत्वेऽपि विशेष्यांशे तदुपपादनयैव गगनादिपदपर्यन्तधावनसम्भवादिति वाच्यम्, सामान्यतः शाब्दत्वे सप्रकारकत्वनियतेरनिवारणात्, तथापि सुबर्थैकत्वाविवक्षादशायां गगनमितिवाक्याद्वस्तुमात्रविषयकतया निर्विकल्पानुभवे न बाधकम्। यदा हि केचित्प्राथमिकपदार्थोपस्थितिस्थानेऽप्यनुभवमेवाभिषिञ्चन्ति तत्तानुलेखात्, तदा तात्पर्यालोचनानन्तरप्रसूतमतेरनुभूतितायां को विप्रतिपद्येत। निर्विकल्पकबोधयोरिति द्विवचनं तु स्थलान्तराभिप्रायेणेति। वस्तुतस्तु किमिह दृष्टान्तगवेषणप्रयासैः; निर्विकल्पमतेरौचित्यानीतत्वात्, तथाहि—न तावदियं भाषा वैकल्यालम्बिनी, न च सर्वस्य प्रतिपादयितुस्तत्राकौशलम्, न च न कश्चिद्वस्तुमात्रप्रतिपित्सुरपि, न चानुकम्पकस्य वक्तुरुपेक्षामपि सर्वोर्हति, न च वस्तुमात्रमसंस्पृष्टं प्रकारैरलीकमपि, विशिष्टघटकतया परैरपि तदुपगमात्, न च न शाब्दी वृत्तिस्तात्पर्यवशंवदापीत्यकामेनापि निर्विकल्पमतिरुपेतव्या, माऽन्यथा प्रसाङ्क्षीदवक्तृतादिकमिति। एतच्चाकाङ्क्षादौ तात्पर्यविषयनिवेशनेन ध्वनितमेव परतोऽखिलमिति।

एवं च समानविभक्तिकत्वं नाखण्डार्थतानियतम्, नीलो घट इदं रजतमित्यादौ व्यभिचारात्, अन्यथा विशेषणविशेष्यभावाध्यासबाधसामानाधिकरण्यानामैक्यसामानाधिकरण्यपार्थक्येन परिगणनस्य प्राचामसामञ्जस्यापत्तेः। नापि लक्षणवाक्यत्वम्, सर्वेषु तटस्थलक्षणेष्वपि केनाखण्डार्थताऽनुमन्येत, विशिष्टेऽपि तात्पर्यस्य क्वचित्सम्भवात्, पूर्व-

कल्पेऽपि चैतत्समानम्। अपि तु स्वरूपतात्पर्यकवाक्यत्वम्, स्वरूपमात्रबुभुत्सानिवर्तकवाक्यत्वं वा। न चैतयोर्वस्तुसतोरखण्डार्थबोधोपयोगः, किन्तु ज्ञातयोरिति स्वरूपे तात्पर्य गृह्णता स्वरूपमात्रबुभुत्सानिवर्तकतया प्रयुक्तवाक्यत्वं वाऽवगच्छता स्वरूपमात्रं प्राक् परिचेतव्यमेवेति किमन्योन्याश्रयपराहतेन व्यर्थेन वा बोधान्तरेणेति वाच्यम्, प्रकारताविशेष्यताभावमवधीर्य विषयतात्वेनैव रूपेण तत्तत्पदार्थनिष्ठविषयतानां परस्परनिरूप्यनिरूपकभावमागतानां तात्पर्यज्ञाननिष्ठकारणतायामवच्छेदकतोपगमेन परस्पराश्रयपरिहारो यद्यपि सप्रकारकबोधस्थले एव संगतः, तथाप्युपक्रमादिग्रहायत्त शक्तिविशेषात्मकतात्पर्यज्ञानं निष्प्रकारकावगमस्थलेऽपि प्राक् सम्भवत्येव, स्वरूपमात्रबुभुत्सानिवृत्तियोग्यतावच्छेदकञ्च स्वरूपतात्पर्यकत्वमेवेति द्वितीयस्यापि प्रथमे एव पर्यवसानमिति तु वस्तुगतिः। स्वरूपतात्पर्यकत्वज्ञानार्थं सम्पादनीयस्य स्वरूपज्ञानस्यागृहीताप्रामाण्यकत्वे बोधान्तरस्य वैयर्थ्येऽप्यन्यथा सार्थक्यमस्त्येवेति निष्पक्षपातः पन्थाः। समानविभक्तिकपदघटितत्वेनेति त्वग्रे स्वरूपतात्पर्यकत्वस्याप्युपलक्षणम्, तेन विना समानविभक्तिकत्वमात्रस्यानुपदोक्तरीत्याऽकिञ्चित्करत्वात्। बाध्यधीविषयस्येति। उपलक्षणयोर्बाध्यबाधकधीविषयत्वोपगमेऽपि विशेषणविधया विषयशरीरान्तःपातित्वाभावेन फलतो वस्तुमात्रविषयत्वमक्षतं सप्रकारकयोरपि तादृशवाक्यजबोधयोः, एवञ्च निर्विकल्पकत्वं वस्तुमात्रविषयकत्वेन, नतु निष्प्रकारकत्वेन, उपलक्षणविधया प्रकारतायाः सोढव्यत्वादिति। वस्तुतस्तु फलीभूतनिर्विकल्पकमतो न सप्रकारकत्वमुपलक्षणमादायापि रक्षितुमुचितम्, अवान्तरबोधे तु विशेषणतयापि सप्रकारकत्वं न त्यक्तुमुचितम्, उत्सर्गतो विशेषणतयैव धर्माणां प्रथनात्। अथैवमवान्तरबोधयोरेव प्रतिबध्यप्रतिबन्धकभावोपगमोऽस्तु, पश्चादुद्भवतो निर्विकल्पकबोधयोस्तथाभिधाने किं बीजमिति चेत्, न तावदज्ञाननिवृत्तिं विना तत्कार्यभ्रमसंशयनिवृत्तिः, न च वस्तुमात्रविषयकमज्ञानमवादृशा ज्ञानेन निवर्त्यते, न च सप्रकारकं ज्ञानं तादृशमिति निष्प्रकारकज्ञाने एव तत्तद्धर्मप्रकारकज्ञानजन्यत्वप्रयुक्तं तत्तद्धर्मप्रकारकभ्रमादिनिवर्तकत्वमज्ञाननिवर्तकत्ववद् व्यवह्रियते न तु तार्किकसम्मतप्रतिबध्यप्रतिबन्धकतावच्छेदकधर्माक्रान्तताऽवान्तरबोधयोस्तिरस्क्रियते, फलीभूतबोधाधीनाबोधविध्वंसं विना तादृशधर्माक्रान्ततया अकिञ्चित्करतया तु निर्भरो निर्विकल्पकबोध एव विधीयते। तत्तेदन्तादेर्विशेषणतास्थले तत्कालावच्छिन्नत्वस्यैतत्कालेऽसम्भवेन विशेषणस्य च विधेयान्वयित्वनियमेन तु गृहीताप्रामाण्यकतया बोधे प्रतिबन्धकतावच्छेदकधर्माऽऽश्लेषोऽपि दुर्लभ इत्यन्यत्। पूर्वमेव विरोधप्रतिसन्धाने बोध उत्पद्यते वा न वेति तु प्रतिबन्धकस्य कार्यानुत्पादप्रयोजकत्वमुत्पन्नेऽप्रामाण्यज्ञापकत्वं वेति मतभेदेन समाधेयम्। न च वस्तुमात्रविषयकमज्ञानमेवाप्रसिद्धम्, तत्तद्धर्मोपलक्षितविषयकस्य तस्यादौर्भिद्यात्। विशिष्टे शक्तिस्थले चैषाऽवान्तरधीरीतिः। व्यक्तिमात्रशक्तिस्थले तु प्रथमत एव निर्विकल्पमतिप्रसवसम्भवेन नावान्तरविशिष्टबोधोररीकारक्रम इति तादृशस्थले निष्प्रकारकबोधस्यैव यथासंभवं प्रतिबध्यता प्रतिबन्धकता चेति। एवञ्चात्रेदन्त्वादिप्रकारकोऽपि व्यामुग्धो बोधो निर्विकल्पक इति मीमांसकादिमतात्, स्वलक्षणमात्रविषयको बोधः स इति सौगतसम्मतात्, प्रकारितादिविषयितात्रयशून्यतया जातिव्यक्त्यादिनिरूपिततुरीयविषयिताशाली स इति तार्किकसिद्धान्तात्, उपलक्षणविधया

प्रकारतानिरूपकोऽपि वस्तुमात्रविषयकः स इति केषाञ्चिद्वेदान्तिनां मन्तव्याच्च पृथक्कृत्यैक वस्तुमात्रविषयकः प्रकारितादित्रयशून्य एव निर्विकल्पो बोध इत्युपन्यस्तं मतम्।

मूलपृष्ठम् ३—बाधकं किमपीति। वस्तुतस्तु सुबर्थसङ्ख्याऽविवक्षायां परमतेऽप्युक्तबाधग्रहदशायां गगनमिति वाक्यादिष्ट एव बोधः। परमते शब्दाश्रयत्वप्रकारकः, एतन्मते त्वनवच्छिन्नविषयताक इत्यन्यत्। तद्वाच्यत्वादीत्यादिनाऽष्टद्रव्यातिरिक्तद्रव्यत्वपरिग्रहः। तात्पर्यविषयेति। अन्वयस्थाने तात्पर्यविषयस्यान्वयबोधस्थाने च शाब्दबोधस्य प्रवेशेन तार्किकमताद्वैषम्यम्। सम्भवत्येवेति। यत्तु येन वाक्येन यत्र यद्वैशिष्ट्यावगाहिशाब्दानुभवो जन्यते तद्द्वारकबोधे तद्वाक्यतद्गताकाङ्क्षायोग्यताऽऽसत्तिहेतुत्वे मानाभावः। तथा च धूमोऽस्तीति वाक्यस्य वह्न्यादिबोधे इव सत्यादिवाक्यस्यापि सत्यत्वादिवैशिष्ट्यविषयकशाब्दानुभवद्वारकाखण्डार्थबोधेऽपि न तद्धेतुत्वम्। एतावांस्तु विशेषः—प्रथमस्यानुमितित्वेन तज्जन्यत्वम्, द्वितीयस्य तद्गतलक्षणाज्ञानजन्यत्वेन शाब्दत्वेऽपि संसर्गाविषयकत्वेन, तत्संसर्गकशाब्दस्यैवोक्तजन्यत्वस्वीकारात्, विशिष्टार्थे पदवृत्तिज्ञानस्यैवाकाङ्क्षादिसहकारित्वकल्पनात्, शुद्धवाक्यार्थानुभवे तु तत्तात्पर्यज्ञानादिसहकृतस्य शुद्धलक्षणाज्ञानस्यैव हेतुत्वम्। निराकाङ्क्षादौ मृद्घट इत्यादौ च शुद्धलक्षणाज्ञानस्य कचित् सत्त्वेऽपि पदविशेषसमभिव्याहारज्ञानजन्यशाब्दबोधस्य द्वारीभूतस्य सहकारिणो विरहेण नाखण्डार्थबोध इति सत्यादिवाक्यार्थाखण्डत्वोपपत्तिप्रकरणे द्वितीयपरिच्छेदे लघुचन्द्रिकायामुक्तम्; तद् यदि विद्वन्मानसावर्जि, तदा का नो हानिः, प्रत्युताकाङ्क्षादेः कारणताया अकल्पनीयत्वेन महल्लाघवमेव। परन्त्वेवं फलीभूतबोधे मानसत्वमेव कुतो नानुमन्यते? तत्र शाब्दत्वानुभवस्तु यदि स्यात्तदा वाक्यजत्वं प्रतिसन्धायेति स प्रतिकूलस्तत्र भवताम्, नहि शब्दमपास्य तद्गतलक्षणाग्रहजन्यत्वेन शाब्दत्वानुभवो निर्विवादः। वाक्यस्य कारणत्वे तु तद्गताकाङ्क्षादे कारणता हठादायाति। यदि तु नास्ति तत्र शाब्दत्वानुभवः, तदा मानसत्वेऽपि न बाधकं किञ्चित्। औपनिषदत्वं तु शुद्धे उपनिषद्घटकशब्दगतलक्षणाज्ञानजन्यग्रहविषयत्वेनेव परम्परयोपनिषत्सापेक्षप्रतीतिकत्वेनापि सम्भवत्येव। शुद्धे तात्पर्यग्रहेण विशेषणानां त्यागस्य शाब्दे इव मानसेऽपि सम्भवात्। शब्दतात्पर्यग्रहस्य शाब्दे एव हेतुता दृष्टेति तु शाब्दस्य शब्दादिजन्यत्वमपि दृष्टमिति समानमेव। शाब्दबोधेच्छावशाच्छब्दाप्रयोगस्थलेऽपि पश्यतः श्वेतिमा[1] रूपमित्यादौ शाब्दोपगमं तु क इवोरीकुर्यात्, इच्छाननुसारित्वाज्ज्ञानगतवैजात्यस्य तत्रार्थापत्तेरेव यौक्तिकत्वात्।

ब्रह्मगगनादिसाधारणव्यवहारकालाबाध्यत्वादिविशिष्टे सत्यादिपदशक्तिर्नतु व्यक्तिमात्रे इति पक्षेऽपि सप्रकारकबोधद्वारा तात्पर्यबलाल्लक्षणया निष्प्रकारकबोधोद्भवसम्भव इति भावेनाभिधत्ते अपिचेत्यादि। भ्रमविरोधीति। भ्रमविरोधित्वमप्रामाण्यज्ञानानास्कन्दितस्यैव, प्रश्नप्रयोजकस्वरूपज्ञानस्य तु नाप्रामाण्यज्ञानानास्कन्दितत्वमिति भावः। इत्याशय इति। शुद्धे वृत्तिविषयत्वतदविषयत्वपक्षयोर्वृत्तिरूपोपाधिकालीनं शुद्धे विषयत्वमित्यर्थं पर्यवसानेन न विरोध इति भावः। एतेनात्र श्रुतिप्रमाणकत्वपक्षं परित्यज्य पुनः

१—आपश्यत इति सम्बन्धः।

परतस्तत्प्रमाणकत्वव्याघातशङ्कायां सन्दर्भविरोध इति नाशङ्कनीयम्, इहापि ब्रह्मणि श्रुतिप्रमाणकत्वपक्षस्य सर्वथाऽपरित्यागात्। आपाततः परिस्फुरन्तमर्थमादाय तु 'न चैवं सर्वथैवे' त्याशङ्का।

मूलपृष्ठम् ४ विरहेऽपीति। धर्माधर्मादिस्थले वृत्तेरन्तरेव समुल्लासेनोपाध्योरेकदेशस्थतया वृत्तिप्रतिफलिताधिष्ठानचितोरभेदसम्भवेऽपि तदभिव्यक्तिर्नाङ्गीक्रियते, अन्यथा धर्मादिकं साक्षात्करोमीतिव्यवहारप्रसङ्गात्। तथाचाभेदापन्नत्वमभिव्यक्ताभेदकत्वमितिभावः। तात्पर्यादिति। अखण्डाभावघटकतया न वैयर्थ्यमिति तार्किकपरिभाषामनादृत्येदम्, तदादरे तु चिदविषयत्वलक्षणमपि स्यान्निरवद्यमिति भावः। सा विषयो यस्येति। फलितार्थकथनमिदम्, न तु समासविग्रहवाक्याकार ईदृशः, स्त्रीलिङ्गशब्दपरकत्वाभावेन पुंवद्भावासम्भवात्, अविकल्पं=शून्यत्वं विषयो यस्येत्येव तु विग्रहवाक्यम्। निगर्व इति निपातशब्दवन्निशब्दस्य निषेधार्थकत्वे पङ्क्तेर्गलितगर्वतामभिप्रैति। नितरामित्यर्थकत्वे तु ममैतावन्तोऽर्था इति पङ्क्तेर्गर्वविशेषम्। कैश्चिद् ग्रन्थकारैरीदृशस्थले निगर्भ इति प्रयुज्यते, रहस्यतमोऽर्थ इति तदर्थः। अत्राविमुक्तशब्दवद् 'अविशब्देन पापानि कथ्यन्ते द्विजसत्तमै' रिति पौराणिकोक्त्याऽविशब्दस्य पापार्थकत्वेन तत्कल्पनोपपादकाज्ञानस्याविकल्पपदार्थत्वसम्भवेन बहुव्रीहितत्पुरुषाभ्यां ब्रह्मणो 'अविकल्पविषय' इत्यनेन लाभसम्भवेऽपि दर्शितानेकार्थविलक्षणप्रमेयसमर्पकत्वाभावेन तादृशार्थस्यानुल्लेखो न न्यूनतावहः, एवमकारपदार्थे वासुदेवे कल्पितत्वमदायाविकल्पपदेन दृश्यसामान्यलाभस्य सम्भवतोऽप्यनुल्लेख इति।

मूलपृष्ठम् ५—उमया विद्ययेति। ब्रह्मविद्याधिष्ठातृतया ज्ञानशक्तिरूपतया वा प्रागुक्तनीत्योमाया विद्यात्वम्। प्रणवसमानार्थकतया चोमाशब्देन ब्रह्मविद्यालाभः। उन्मेषदशायाः शक्तितत्त्वे प्राधान्यं ब्रह्मतत्त्वे त्वनुत्तरदशाया इति विशेषद्योतनाय परमुमाशब्दे उकारस्य प्रणवे त्वकारस्य प्राक् प्रयोग इत्यन्यत्। टाबन्तता तु लोकाश्रयत्वाल्लिङ्गस्येति।

मूलपृष्ठम् ६—नुतिनतिभेदेन मङ्गलस्येव शक्तिशक्तभेदेनोपास्यस्यापि द्वैविध्यं पुंदेवतानां शक्ते स्त्रीदेवतानां च शक्तावन्तर्भावञ्चालोच्यावतारयति ईशमिति। ओजस्विचूर्णकमिश्रकेतिगद्यत्रयान्तर्गतं मिश्रकमिदम्, पद्यप्रियत्वे तु चारुचर्यामितिपाठो द्रष्टव्यः। महिषेऽसुरगणामधिपे देवानाञ्च पुरन्दरे इत्यादिवन्नवाक्षरगाथात्वपरिकल्पनं ह्यगतिकगतिः। दुरितं भेत्तुमिति। दृश्यन्ते ह्यप्रसक्तापराधा अपि विनयशीलतया मान्यैरपराधक्षमां कारयन्त इतीत्थमर्थयमानस्यास्य तत्त्वज्ञतयाऽप्रसक्तपाप्मनोऽपि विनयातिशयो व्यज्यते।

यत्तु जिज्ञासासूत्रभामत्यादावभ्यधायि—सांसारिक इव शब्दावगतब्रह्मतत्त्वोऽपि प्रत्यवैति, तस्य मात्रयाऽनुवर्तमाने मनुष्याद्यभिमाने श्रद्धाराहित्येन विधिशास्त्रेण श्राद्धाधिकारिणाऽनधिक्रियमाणत्वेऽपि श्रद्धामनपेक्षमाणेन निषेधशास्त्रेणाधिक्रियमाणत्वात्, तदधिकारितावच्छेदकतायाः श्रद्धायामभ्युपगमे तु नास्तिकस्याश्रद्दधानस्य निषेधलङ्घिनः प्रत्यवायानुत्पत्तिप्रसङ्गादिति, तत्रेदं वक्तव्यम्-अनया रीत्या परोक्षब्रह्मतत्त्वस्येवापरोक्षब्रह्मतत्त्वस्यापि प्रत्यवायाभ्युपगमापातः, न चेष्टापत्तिः, 'क्षीयन्ते चास्य कर्माणि' 'तस्यैव स्यात्पदवित् तं विदित्वा न लिप्यते कर्मणा पापकेन', सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि,

'यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते' मतिगलदहङ्कारा पतितापि न लिप्यते' इति श्रुतिस्मृतिशतव्याकोपात् । न चापरोक्षब्रह्मतत्त्वस्य निषिद्धे प्रवृत्तिरेव न प्रसज्यते; बुद्धिपूर्विका वा तदपूर्विका वा, नाद्यःकल्पः, इतिहासपुराणादौ ब्रह्मविन्मान्यानामपि महीयसः साहसिक्यस्योपनिबद्धत्वात् , इदानीन्तनानामपि रजस्तमसोरुद्रेकस्यादृष्टविशेषवशादवश्यं सम्भाव्यत्वाच्च, यज्जगदुर्जगद्गुरवः 'प्रकाशं च प्रवृत्तिञ्च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति' इति 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छती' ति च । अत एव न द्वितीयोऽपि । नहि सर्वदा ब्रह्मापरोक्षदर्शिनोऽपि समाधिः, जीवन्मुक्तभूमिकास्वप्युत्तरभूमिकामधिरूढस्यापि भाग्यविशेषवशादधरभूमिकायामवरोहणसम्भवाच्च । तथाहि-उन्मीलनसमाधिमधिकृत्य तावदेवम्—यदा कदाचिद्व्यवहरन्नपि परेषु गतागते कुर्वत्स्वपि महाभागतया ब्रह्मानुसन्धानं न जहाति, तत्कालावच्छेदेनैवासौ सप्तमभूमिकाभाक्, ब्रह्मानुसंधानं पुनर्व्यवहारार्हविषयमादाय समूहालम्बनं वा ज्ञानद्वययौगपद्योपगमे पृथग्वेत्यन्यत् । यदा पुनरसावेवैकाकी व्यावहारिके कार्ये नियुक्तमतिरात्ममतिमत्यजन्नपि कस्याञ्चिद् व्यक्तावागतायां तन्मयतामिवापद्य ब्राह्मीं धियं धुनोतीव, तदाऽसौ षष्ठभूमिकोत्तीर्णः । यदा त्वसावेकाक्यपि कियन्तंचित्कालं व्यवहारदशायां स्वरूपमनुसन्धाय स्वयमेव बहिर्मुखतामाश्रयति तदा पञ्चमीं भुवमधिरूढवान् । एवं निमीलनसमाधिमधिकृत्यापि, केवले ब्रह्मण्येव लीनमना जनान्तरागमनादिना कदाचिद्व्युत्थानमभजन् सप्तमभूमिमनुभूय तादृशनिमित्तेन कदाचिद् व्युत्तिष्ठन् षष्ठभूमिमधिगत्य स्वयमेव पुनर्निमित्तविशेषेण व्युत्थितः पञ्चमदशाधिशायी प्रवर्तते यथाऽदृष्टं व्यावहारिके पथि ।

स्वगततया तां तां प्रवृत्तिं नासौ पश्यतीति चेत्, किमेतावता, कदाचिन्निषिद्धक्रियोन्मुखतामात्रं प्रत्यवायप्रयोजकं तु भवदभिमतमागतमेव । यदि तु क्वचित्कल्पे कश्चिद् ब्रह्मावगतिमवाप्य चिरं जीवन्नपि सुकृतराशिवशादुद्रिक्तसत्त्वमात्रो निमीलनसमाधिमेव सततमादधानस्तिष्ठेत् , न तु तस्य बुद्धिपूर्विका तदपूर्विका वा व्यावहारिकपथपान्थता स्यात् , तस्यैव च ब्रह्मावगतिः साक्षात्कारात्मिका स्यादित्युच्येत, तदेदृशस्य कस्यचित्सम्भाव्यमानस्यैव कृतेऽध्यात्मशास्त्रप्रपञ्च एतावानिति तन्निर्माणस्य समुचितफलत्वं तन्निर्मातॄणां च तन्निर्मातृत्वादेव तादृशदशाशून्यतयाऽनुमितानां माहात्म्यं साधु व्युत्पादितं स्यात् ।

'साक्षात्प्रबोधे देवेशि देहः सद्यो विलीयते', इति माहेश्वरतन्त्रोक्तिस्त्ववस्थाविशेषे व्यक्तिविशेषं[1] योगिनां चरमासम्प्रज्ञातस्येव ज्ञानवतां चरमसाक्षात्कारस्य विदेहकैवल्याविनाभूततया सर्वसंस्कारात्यन्ताभिभवकालीनत्वरूपचरमत्वविशिष्टसाक्षात्कारनिरूपणं वोद्दिश्यैव नेतुमुचिता, अन्यथा तु मानान्तरविरोधाविरोधचर्चा तावदास्ताम् , प्रवृत्तौ सत्यामपि निर्लेपत्वसमर्पकवचसां तु परोक्षतत्त्वज्ञानिन्येव योजनीयत्वे तस्यापि न प्रत्यवायभागिता प्रमाणादृता स्यादिति 'सांसारिक इव शब्दावगतब्रह्मतत्त्वोऽपि प्रत्यवैतीति' सूक्तं स्यात् ।

तस्मात्साहङ्कारतैवादृष्टफलकशास्त्राधिकारितावच्छेदकान्तःपातिनीति नास्तिकस्य 'साहङ्कारतया प्रत्यवायः, गलिताहङ्कारस्य तु निर्मूलितवासनतया चरमजन्मनो विदुषोऽहङ्काराभासो दृश्यमानोऽपि न तादृशशास्त्राधिकारितामानयति, आभासत्वादेव, अतएव तस्य प्रवृ-

[1]—उद्दिश्येत्युपरितनेनान्वयः ।

त्तिरपि नास्ति किन्तु तदाभासः। तस्यापि तु चिराभ्यस्ततया शिष्टाचाराचरणस्य लोकानुजिघृक्षुतया चौचित्येन, विशुद्धसत्त्वतयाऽऽस्वादितपूर्णानन्दतया च स्वात्मारामतोन्मुखत्वेन च न स्वरसतो निषिद्धाचरणमित्येवोत्सर्गसिद्धमित्येव वक्तुमुचितम्।

'पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः। तं वै देवाः प्रपश्यन्ति स्वस्य चान्तरपूरुषः, (म० भा०) इत्यादिशास्त्रप्रामाण्याच्च परोक्षविदोऽपि नाहमस्मीत्यहङ्काराभावभावनात्मकं परोक्षज्ञानमेव प्रायश्चित्तं सर्वपाप्मनाम्। 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्'। 'उपपातकसङ्घेषु पातकेषु महत्सु च। प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्'॥ इत्यादिवचसां च प्रवृत्तिः परोक्षज्ञानिन्येवोचिता, न पुनरपाकृतसकलकैङ्कर्ये परिपूर्णानन्दापरोक्षजुषि, तस्यापि तु तादृशध्यानमयी वृत्तिः स्वभावत एवेत्यन्यत्।

अथास्तामेवं सञ्चितानां साक्षात्कारानन्तरभाविनां च दुरितानामप्रसक्तफलकता, प्रारब्धफलानां तु निवृत्तये दुरितं भेत्तुमिति प्रार्थना स्यात्। न च प्रार्थनमीदृशं दुरितपीडितस्यैव सम्भवति, साक्षात्कृततत्त्वस्तु न तथा, 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी चे' ति पृथग् विभजनादिति-वाच्यम्, एकस्मिन्नपि पुरुषे कालभेदेनार्तिजिज्ञासादिमत्त्वोपपत्त्या तादृशविभागस्योपधेयसङ्करेऽप्युपाधीनामसाङ्कर्यमिति नयेनैवोपपाद्यत्वात्। न चेदृशोऽपि सङ्करो ज्ञानात्पुरैव ननु पश्चादिति वाच्यम्, ज्ञानिनोऽपि भक्तत्वे कोमलिमालिङ्गितचेतस्तया कदाचिदार्तिमनुभवतस्तादृशप्रार्थनोपपत्तेः, विक्षेपहेतुप्रारब्धविशेषस्य ब्रह्मतत्त्वानुसन्धानराहित्यप्रयोजकस्य कदाचित् सम्भवात्, 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृह' इत्यादिलक्षणानां स्वरूपानुसन्धानकालीनतया ज्ञानोत्पत्त्यनन्तरमपि जाग्रतोऽपि कालिकाव्याप्यवृत्तित्वात्। न च प्रारब्धस्य भोगादेव क्षय इति वृथाऽर्थनेति साम्प्रतम्। भगवच्छरणीकारेणापि तत्क्षयसम्भवात्, तदुक्तं त्रिपुरारहस्ये ज्ञानखण्डे—'प्रारब्धं नियतिर्वाऽपि महेशविमुखे भवे' दिति चेदस्त्वेवम्, यद्युपपद्यते, प्रकृते तु 'अनिशचि'तमिति विशेषणान्नोद्वेगविशेषजनकस्यैव दुरितस्य क्षयोऽर्थ्यत इति विनयोक्तिरेवेयमिति। प्रसिद्ध्यतिक्रम इति। तथा चेन्द्रवरुणभवेत्यादिसूत्रीत्यैव व्युत्पन्नस्तादृशदोषं प्रतीयादेवेति भावः। ध्येयमिति। घटपदांशे शाब्दत्वमनुपेत्योपस्थितित्वोपगमे तादृशानुव्यवसायविरहोपपादनसम्भवः, प्रत्यभिज्ञायां स्मृतित्वानुभवत्वयोरिवावच्छेदकभेदेन स्मृतित्वशाब्दत्वयोरपि शाब्दे समावेशसम्भवात, अनुभवानां शिक्षाकृतवासनानुसारितया तादृशानुव्यवसायविरहे विवादस्यापि सम्भवाच्चेत्यस्वरसबीजमिह।

पदार्थे इव पदेऽपि शब्दार्थतासद्भावेन शब्दस्यार्थे इति समासाभिप्रायेण व्याचष्टे-पदपदार्थात्मकस्येति। इत्यर्थमाहुरिति। ईदृशविकल्पानां काचित्कतया नाखिलग्रन्थसाधारणी प्रतिज्ञा स्यात्। योगरूढ्योरभ्युपगमेन प्रमालक्षणेऽतिव्याप्त्यादिनिरूपणेनैव तत्खण्डनस्यार्थनिरुक्तिनिरासे एव पर्यवसानाच्च नायं विभागः समुचितः, ईदृशोऽपि विभागस्य शब्दप्रमाणखण्डनान्तर्भावेन परमौचित्यं स्यादित्यस्वरसोऽत्र। कालभेदेन स्फूर्तिवैचित्र्यात्स्वव्याख्यानमेव दर्शयति-अन्य इति। स्वस्याप्यन्यत्वं कश्चिदपेक्ष्य भवत्येवेति भावः। स्वरूपस्यापि लक्षणत्वोपगमेन लक्ष्यत्वलक्षणत्वयोः केवलान्वयितया पृथगुपन्यासो मन्दफल इति नात्रापि चेतसो भरः।

इति खण्डनमङ्गलशारदायां राजहंसः।

## सत्त्वेन प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डनशारदायां राजहंसः

कैश्चिदुच्यते संशयाभावो विचारफलमिति संशयस्वरूपयोग्या विप्रतिपत्तिरेकसंबन्धिज्ञानविधया संशयरूपप्रतियोगिस्मारिकेति फलज्ञानेन विचारप्रवृत्तावुपयुज्यते, विशेषणज्ञानविधया प्रतियोगिज्ञानस्याहेतुत्वेऽपि यद्व्यतिरेकज्ञानत्वेन यत्प्रतिबन्धकता तन्निश्चयस्य तद्धेतुतेति संशयाभावज्ञानस्य विचारप्रतिबन्धकतया संशयवत्त्वनिश्चयस्य तद्धेतुतावश्यिकीति तत्र विप्रतिपत्त्युपयोगः, विजयादिमात्रमुद्दिश्य तु न विचारे प्रवृत्तिः, विचारणीयविषयकसंस्कारस्य नाशशङ्कया तदुदाकार्याय निश्चयस्थलेऽपि प्रवृत्तिरिति तन्न, संशयस्मरणस्य प्रकारान्तरेणापि सम्भवात्, न चोपायस्योपायान्तरादूषकत्वम्, एवं सति विप्रतिपत्तेः कथामात्रे नियमनानुपपत्तेः, संस्कारनाशसम्भावनानुत्पत्तिस्थलेऽपि दृश्यमानविचारस्य विजयविनोदादिमात्रोद्देश्यकत्वस्यापलपितुमशक्यत्वाच्च। जयपराजयव्यवस्थार्थं तत्तत्कोटिपरिग्रहस्य च तत्तद्वादिनं प्रति मध्यस्थकर्तृकतत्तत्कोटिसमर्पणेनैव सम्भवाच्च, तस्य च विप्रतिपत्तिवाक्यस्थलेऽप्यावश्यकत्वात्। एवं च प्रकृतपक्षतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नतदभावयोश्च प्रथममवश्यं बोधनीयत्वेऽपि नवापदघटितवाक्यप्रयोगो न विचारमात्रेऽपि तु तद्विशेष एवेत्याशयेनाह—

मूलपृष्ठम् ७—अत्र विचारेत्यादि। मध्यस्थसंशयस्त्वनाहार्य इवाहार्योऽपि सम्भवति। आहार्यस्य प्रतिबन्धः पुनः प्रयोजनसिद्धाविच्छाविच्छेदादेव। आहार्यसंशयस्य च विचारप्रवर्तनौपयिकताऽनुभवादिबलात् सम्यक्त्वखण्डने मूल एव व्यक्ता। एतेनाहार्यसंशयवदाहार्यपरामर्शस्यापि हेतुत्वप्रसङ्गो न देशनीयः, प्रमाणसदसद्भावाभ्यां वैषम्यात्। न च निश्चिततत्त्वस्य नवापदघटितवाक्यप्रयोगमात्रं न त्वाहार्योऽपि संशयः, वाक्यप्रयोगमूलतया तस्यावश्यमुपासनीयत्वात्। उक्तप्रसङ्गे आपादकस्याभावाच्च, न च आहार्यत्वं यद्यनुमितिजनकज्ञानवृत्ति स्यादनुमितिजनकपरामर्शवृत्ति स्याज्ज्ञानत्ववदित्यापाद्यम्, संशयत्वस्य तु पक्षसमत्वान्न तत्र व्यभिचार इति वाच्यम्, अप्रयोजकताग्रस्ततयाऽऽपाद्यापादकयोर्व्याप्तिनिश्चयानुपपत्तेः।

मूलपृष्ठम् ८—विशेष्यत्वस्यासत्त्वेनेति। प्रकारतावच्छेदकीभूततादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यात्यन्ताभावेऽप्रसिद्धेरिति भावः। अभेदभ्रमातिरिक्तस्थले तथानिर्वचनादरेऽत्यन्ताभावत्वमनादृत्य प्रकारतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमात्रविवक्षणे वाऽप्याह—संयोगादिनेति। सम्भवेनेति। भूतले नास्ति घट इत्यादिप्रतियोगित्वाप्रकारकबाधग्रहस्थल इति भावः।

मूलपृष्ठम् ९—कालवृत्तित्वादिति। इदानीं गगनमित्यादिधीबलादिति भावः। दिगर्थस्तु यं धर्मं धर्मितावच्छेदकीकृत्य तादृशाभावो ज्ञातव्यः, स चेदयमेव धर्मस्तदात्माश्रयः, अन्यश्चेत्तदा तस्यैतस्मिन् धर्मितावच्छेदकतोपगमेऽन्योन्याश्रयः, एवञ्चक्रकादिकमपि, तादृशप्रतियोगितात्वस्यानुगमे स्मृत्यन्यत्वखण्डनशारदावतारः, प्रत्यक्षत्वजातिखण्डने निर्वर्णितानुगतधर्ममात्रखण्डनभागिता च। तस्याननुगमे त्वभावकूटे पर्यवसानेनासर्वज्ञदुर्ज्ञेयतेति कथमस्य कंचित्साधनसम्भवः। न च वेदान्तिनामपीयं बाधेति भणनीयम्, तैरिह साक्षितया निर्धर्मकतत्त्वस्यार्थिकसिद्धेरेवोपगमादिति द्रष्टव्यः। पूर्वप्रयोगौचित्यापत्तेरिति।

आहिताग्न्यादित्वकल्पने गौरवात्। किञ्च नियतिर्हि व्याप्तिरेवेति नियतशब्दस्य व्याप्तापर-पर्यायव्याप्यपरतैव स्वरससिद्धा। व्याप्यव्यापकभावस्य सम्बन्धतया द्विष्ठतां कामयमानस्या-खण्डतापदचुम्बिताध्रौव्याभिप्रायेण तु तदर्थकतां नियतिपदस्योपगम्य नियम्यनियामक-पदयोरव्यवस्थयैव प्रयोगः, न चासावभिप्रायो युक्तः, अखण्डताया अनुभवपराहतत्वात्। एतेन प्रयोज्यप्रयोजकपदयोरपि व्याप्यव्यापकयोरव्यवस्थयैव प्रयोगस्य सतत्त्वमुपवर्णितम्। ज्ञाप्यज्ञापकपरतापि लक्षणयैवाद्रियमाणैतयोरिव नियम्यनियामकपदयोरपि समानेति। दृष्टान्तश्चात्मेति। साध्यप्रसिद्धेः कथाङ्गभूताया आत्मन्येवादृतत्वेन तद्विशेष्यकसत्यत्व-प्रकारकाभ्युपगमे प्रतियोगित्वान्तदलमपि निराबाधमिति भावः।

मूलपृष्ठम् १०—चार्वाकत्वमाहुरिति। उक्तचतुष्टये चार्वाकस्वरूपपरिचायकत्वोपपत्ता-वपि लक्षणत्वे व्यर्थतेत्यस्वरसः। यथार्थज्ञानवतेति। तथागतशब्दस्य स्वारस्यप्रदर्शनमा-त्रपरमिदं व्याख्यानम्। तेन दीर्घनिकायादिबौद्धग्रन्थेषु 'ब्राह्मणानां चापलमात्रमात्मनः शाश्वतत्वाभिधान' मिति सुगताभिहिततया वर्णनेऽपि न क्षतिः। एवं सति प्रायस्तज्ज्ञानानां याथार्थ्यं न तु सर्वांशे सर्वेषामिति भूम्नि मतुप्प्रयुक्त इति तत्त्वम्। यथा पूर्वे बुद्धा आचरित-वन्तस्तथैवायमप्याचरितवानित्यपि तथागतशब्दार्थमाहुः। मध्यमाशब्देन शून्यतोच्यत इति।

अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः।
भावानां, ते न पश्यन्ति द्रष्टव्योपशमं शिवम्॥

इत्युक्त्याऽऽद्यन्तकोटिद्वयमस्तित्वनास्तित्वात्मकं पदार्थानाम्, तद्विनिर्मुक्तत्वं च शून्यत्वम्। तथात्वञ्च सकलजगदन्तर्गतत्वेनानिर्वचनीयतया शून्यत्वस्यापि। 'बुद्धैरात्मा न चानात्मा कश्चिदित्यपि देशितः।' इत्युक्त्या त्वात्मत्वानात्मत्वे आद्यन्तकोटी, तद्रहितत्वं च सर्वत्र। दर्शितं चाधिकं दर्शनसर्वस्वे। 'नैवाग्रं नावरं यस्य तस्य मध्यं कुतो भवेत्।' इति सौगतोक्त्या तु जन्मप्राक्काले नाशकाले चाविद्यमानतया मध्यकालमात्रवृत्तित्वेनैव घटादे-र्मध्यमावस्थाभाक्त्वम्, तस्याः सांवृतत्वेन तु निषेधमभिप्रेत्य 'तस्य मध्यं कुतो भवे'दित्युच्यते। एतदुपपादनं त्वनुमानखण्डनशारदातद्राजहंसयोर्द्रष्टव्यम्। सौगतानामाचारमार्गे तु नात्यन्तं क्लेशप्रदतपसो नापि च भूरिभोगस्यादरोऽपि तु मध्यमदशाश्रयणमित्येवमपि मध्यममार्गमा-मनन्तीत्यन्यत्। भगवत्पाद इतीति। सुरगुरुः स्वयं मूले भगवत्पदेनाभिहितः, तथा-गतोऽपि भगवानिति प्रथित एव, श्रीशङ्कराचार्यचरणानां तु पादौ भगवन्तौ = ऐश्वर्यादिमन्ता-विति निरतिशयोत्कर्षव्यक्तिः। किञ्च भगवतेति सुरगुरोर्विशेषणं मूले तथागतभगवत्पादयो-रप्यनुवर्तनीयम्, न च तथागतशब्दपर्यायतया भगवच्छब्दस्य नामानुशासने प्रसिद्धेर्भगवता तथागतेनेति सामानाधिकरण्यानुपपत्तिः, भगवच्छब्दस्यावयवार्थमात्रविवक्षायां तदुपपत्तेः। किञ्च भगवत्तायाः पूज्यत्वसामानाधिकरण्यनैयत्येऽपि पद्यते इति पाद इत्येवं व्युत्पादितपाद-पदोपादानेन निरतिशयविश्वैकसमर्हणार्हत्वं गम्यतेऽन्वर्थसञ्ज्ञातः।

मूलपृष्ठम् ११—इत्याह स्मेति। अत्र प्रमात्वस्य विषयविशेषनियन्त्रितत्वेनाभिमतपदं लिष्प्रयोजनम्, वाक्यघटकपदार्थोपस्थित्या शाब्दबोधानन्तरं परामर्शेन प्रतिवादिन्यनुमितेरुत्प-त्त्याऽतिव्यवहितत्वेनानपार्थकवाक्येऽपि तादृशजनकत्वाभावसद्भावेनातिव्याप्तिश्च, प्रमा-

प्रयोजकपरामर्शाप्रयोजकवाक्यत्वस्य प्रमात्मकपरामर्शाप्रयोजकवाक्यत्वस्य वोक्तौ तु सद्वचनाभासलक्षणयोगित्वस्याप्येतद्रूपतायां पर्यवसानस्य वक्तव्यत्वेन तस्मिन् साधनबाधनाक्षमतानियामकत्वबोधकोत्तरग्रन्थासङ्गतिः, येनेत्यादिना च तयोर्भेदस्य स्फुटं प्रतीतेः, उक्तव्याख्याने तु योग्यातायाः शक्तिविशेषरूपतया तयोर्भेदसम्भव इत्यस्वरसबीजं द्रष्टव्यम्।

प्रमित्युपधायकेति। अथ प्रतिबन्धकविशेषवशादनुमितेरनुत्पत्तावपि सद्वचनाभासत्वसम्भवेन योग्यत्वं कुतो न निवेशितमिति चेत्, प्रत्यक्ष इवानुमितावपि सिद्धेरप्रतिबन्धकत्वात्। किञ्च कस्यचित्प्रथमान्तमुख्यविशेष्यकः शाब्दबोधोऽपरस्य धात्वर्थव्यापारविशेष्यकः सोऽनुभूयमानो भासत इत्येतादृशानन्तवैमत्यमूलालोचने वस्तुतोऽनुभवो निर्विशेषोऽपि चिन्तामणिवद् यथावासनमेव प्रथत इत्येव हस्तगतः सिद्धान्तः सम्पद्यते। एवं चैकशेषस्य कर्तुमयुक्तत्वेन समानविषयकज्ञानद्वयसामग्रीसंवलवेलायां तत्तद्धर्मावच्छिन्नमेकमेव ज्ञानमुत्पद्यमानं न कस्यचिदनुभवविरोधेन भीषयितुं शक्यते। त्रिपुटीप्रत्यक्षवादिना प्राभाकरेण चात्मानुमितेरात्मरूपैकविषयकत्वावच्छेदेन प्रत्यक्षत्वमनुमितित्वं चादरणीयमेव। पल्लीप्रभृतिजन्तूनां सहसा निकृत्तकलेवरांशस्य कियन्तंचित्कालं स्पन्दविशेषोपलब्ध्याऽध्यात्मप्राणस्येव तत्समनियतमनसः शरीरप्रसृत्वरताया एव यौक्तिकत्वेन युगपन्नानाज्ञानजनकताया अपि सम्भवाच्च। विभिन्नविषयकनानाज्ञानसामग्रीसंवलने तु तत्तद्विषयकत्वावच्छेदेनैव तत्तद्वैजात्यानामेकत्र ज्ञाने समावेशः।

एतेन—बुभुत्सिते एकत्रार्थे विजातीयानुभवसामग्र्योः सन्निपाते कस्मिंश्चिदप्यनुभवे जायमाने बुभुत्सितार्थावगतिसाकल्यसम्पत्तेः पुनरवगतेरसम्पाद्यत्वमिति यत्सामग्र्या लघुत्वं तस्या एव फलजनकत्वम्। बुभुत्सितार्थद्वये विजातीयानुभवसामग्र्योः सन्निपाते कयाप्येकयैवार्थावगत्या भवितव्यम्, जातिसाङ्कर्यज्ञानयौगपद्यानुपगमादिति बुभुत्सितार्थावगतिसाकल्यासम्पत्तेः पुनरवगतिः सम्पादनीया, सा च सामग्र्यधीना, तत्र गुरुसामग्र्यपेक्षया लघुसामग्रीसम्पादनं युक्तमिति यत्सामग्र्या गुरुत्वं तस्या एव प्रथमतः फलजनकत्वमित्यनुभवसिद्धम्। तथा चानुमितिसामग्रीतः शाब्दसामग्र्याः, शाब्दसामग्रीतश्च प्रत्यक्षसामग्र्याः लघुभूताया अनतिरिक्तविषयिकायामनुमितौ शाब्दमतौ च प्रतिबन्धकत्वम्, विभिन्नविषयके शाब्दबोधे चानुमितिसामग्र्यास्तादृशे प्रत्यक्षे च शाब्दसामग्र्याः प्रतिबन्धकत्वमिति व्युत्पत्तिवादतत्त्वालोकोक्तं—निरस्तम्। सामग्री तावद्गौरवलाघवे नालोचयति, अचेतनत्वात्, नापि जनः, अबुभुत्सितार्थेऽपि ज्ञानद्वयसामग्रीसंवलनात्। न चैकत्र निर्णीतोऽर्थोऽपरत्रापि सञ्चार्यत इति बुभुत्सितार्थे कथितप्रतिबध्यप्रतिबन्धकभावनिर्णयेऽन्यत्रापि तथाकल्पनमिति वाच्यम्, बुभुत्सितार्थेऽपि पामराणामपि गौरवागौरवालोचनचातुर्यचुम्बितचेतनानां बोधद्वयहेतुनिवहसंवलनबलेन बोधोद्भवेन तथाकल्पनानुपपत्तेः। विचारकैरपि व्यवहर्तृतादशामधिशयानैर्गौरवाद्यवगतौ मनोऽनर्पणाच्च। तस्मादीदृशशिक्षानुसारिवासनामात्रमूलककार्यकारणभावप्रतिबध्यप्रतिबन्धकभावावधूननायैव निष्प्रयोजनतया सहनानर्हं जनकतावच्छेदकधर्मवत्त्वरूपयोग्यतानिवेशे गौरवं समीक्ष्य वैशिष्ट्यात्मकोपधायकतानिवेशश्चुम्बत्यौचित्यम्। शक्तिविशेषरूपयोग्यतानिवेशस्तु लघुभूतो नोक्तप्रतिबध्यप्रतिबन्धकभावादिवदस्पृश्यपङ्क्तौ प्रवेश्यो येन परामर्शाव्यवहितोत्तरक्षणे क्वचिन्मूर्च्छादिसम्भावनयाऽव्याप्तिसम्भा-

वनाऽपि भवेत्। न च प्रमात्मकपरामर्शप्रयोजकत्वमेव लाघवान्नाभ्यधायि कुत इति शङ्कनीयम्, वस्तुतः साध्यवति धर्मिणि भ्रमात्मकपरामर्शेनापि प्रमोत्पादनेन तत्प्रयोजकवाक्यस्य समीचीनत्वोपगमपक्षे तथानिवेशासम्भवात्, तत्पक्षस्य सर्वथैवानादरणीयत्वेऽपि परामर्शस्य फलीभूतप्रमाविषयाधिकविषयकत्वेन तदीयसर्वांशप्रमात्वस्य फलीभूतमितिनिष्ठप्रमात्वापेक्षयाऽतिगुरुतया निवेशानर्हत्वात्। किञ्चोद्बुद्धव्याप्तिसंस्कार, गृह्यमाणव्याप्यतावच्छेदकधर्मप्रकारकज्ञान, व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानानामेकशक्तिमत्त्वेन कारणतालाभाय फलीभूतप्रमानुकूलशक्तिमत्त्वेन परामर्शप्रवेशं सूचयितुमपीत्थमेव वक्तुमुचितमिति।

मूलपृष्ठम् १३—**फलहेतौ तृतीयेति**। अभेदाभिधानस्य निष्प्रयोजनत्वात् समयबन्धान्वय्यभेदस्तृतीयार्थो नात्राद्दतः।

मूलपृष्ठम् १४—**प्रमाणाद्यनभ्युपगमनिमित्तक इति**। 'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते' इति भवभूतिप्रयोगादावुपाधिपदस्य बहुलं निमित्ते प्रयोगदर्शनादत्रापि तन्निमित्तपरतया व्याख्यातम्। **कथाधिकारासम्भव इति**। उक्तञ्च 'सर्वथा सदुपायानां वादमार्गः प्रवर्तते। अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः'। इति श्लोकवार्तिककृतापि। **प्रथमपुरुषप्रयोगलिङ्गेनेति**। प्रतिवादिदशातोऽवतीर्य ग्रन्थकर्तृरूपतयाऽभिधाने मध्यमपुरुषप्रयोगाप्रसङ्गेऽपि कथञ्चिदुपष्टम्भमात्रं पूर्वपक्षे मूले वात्स्यायनवचनव्यक्तिरुपन्यस्ताऽवगन्तव्येति भावः। **कथकं प्रत्येवेति**। कुतो मे कथायां नाधिकार इति ब्रुवता चार्वाकादिना सहाधिकाराभावसाधनाय कथाया आवश्यकत्वात्, अन्यथा भवत एव पराजयप्रसङ्गादिति भावः।

मूलपृष्ठम् १५—**अविशेषोऽपीति**। व्यापकांशस्य व्याप्यकुक्षिनिक्षिप्तत्वेन सिद्धसाधनन्तु स्पष्टमेव। हेतुतावदित्यस्य स्थाने हेतुतया व्यवहार्यतावदित्युक्तौ नोक्ताविशेषो न वा सिद्धसाधनमित्यत आह **अस्तु वेति**। **साध्यात्मकयोग्यतेति**। प्रकृतानुमानचतुष्टये सत्त्वप्रकारकाभ्युपगमयोग्यतायाः साध्यतया तदवच्छेदकं जिज्ञास्यत इति भावः।

पञ्चमीघटिततया तत्त्वनिर्णयादेः समयबन्धस्य च कार्यकारणभावसमर्पणपरे मूलवाक्ये तत्त्वनिर्णयादिजनकत्वेन समयबन्धोपादानमनुचितम्, नहि घटदण्डयोः कार्यकारणभावावगमार्थं घटजनकदण्डाद्घट इति प्रयोगो नारमणीयः, दण्डाद् घट इत्यस्यैव पर्याप्तत्वात्, तथा च व्यवहारनियमरूपफलार्थः = तत्त्वनिर्णयाद्यनतिप्रसक्तिप्रयोजको यः समयबन्धस्तस्मादिति प्राग्दर्शितापि व्याख्याप्रणाली नात्रादर्तव्येत्याशयानोऽन्यथा व्याचष्टे—

मूलपृष्ठम् १६—**कथौपयिकनियमानामिति**। नियमपदस्य व्याप्तिमात्रार्थस्य कार्यकारणभावपरत्वे लक्षणैव स्यादिति तामसहमान आह **अथवेति**। व्यवहारविषयकनियमः = कथारूपव्यवहारनिष्ठव्याप्तिः। **पर्यनुयोज्योपेक्षणं नोदभावीति**। वादिप्रतिवादिनोरीदृशाभिधानद्वये पर्यनुयोज्योपेक्षणपदं स्वार्थघटकपर्यनुयोगविषयनिग्रहविशेषप्रस्तत्वपरम्। एवञ्चाहं पर्यनुयोज्योऽपि त्वयोपेक्षितः, त्वं पर्यनुयोज्योऽपि मयोपेक्षित इत्यभिधाने स्पष्टे उपलक्षणार्हे इहेति।

मूलपृष्ठम् १७—असाधकत्वस्याप्यनुमानमिति । व्युत्पन्नस्य प्रतिवाद्यादेर्व्यभिचाराद्युद्भावनमात्रेणैवासाधकताबोधसम्भवेन तदीयं परार्थानुमानं नातिप्रयोजनकमित्यरुचेराहृध्येयमिति ।

मूलपृष्ठम् १८—इत्यपि केचिदिति । अत्तरास्वारस्यं स्फुटं कारणत्वालाभश्चेत्यस्वरसबीजमिह ।

मूलपृष्ठम् १९—नाभ्युपेयत इत्यन्वय इति । पश्चादित्यस्य देह आत्मत्वग्रहानन्तरमित्यर्थे तु विचार एवान्वयः । मूले नियतवाग्व्यवहारक्रियेति ह्रस्वान्तपाठादरे बहुव्रीहिपरतया व्याख्यामुपन्यस्यति—

मूलपृष्ठम् २०—नियता व्याप्येत्यादिनेति । दीर्घान्तपाठानुरोधे तु प्रमाणादिनैव वाग्व्यवहारः कर्तव्य इत्येवं प्रमाणादिनैयत्येन वाग्व्यवहारनिष्पादनस्य समयबन्धेनेत्यर्थः। प्रागभावक्षणानां व्यावृत्तिरिति । नहि घटप्रागभावक्षणेषु घटस्य कालिकः सम्बन्ध इति भावः ।

मूलपृष्ठम् २१—न्यूनाधिकसत्ताकल्पनादिनेति । आदिना पारमार्थिकत्वरूपव्यधिकरणधर्मावच्छिन्नाभावोपगमोऽवगन्तव्यः ।

मूलपृष्ठम् २२—तोयत्वप्रकारकप्रतीतिविषयत्वेन सादृश्यमाशङ्क्याह प्रत्यक्षप्रतीतिकृतेति । व्यावहारिकरजतधिय इति । व्यावहारिकरजतस्थलीय'रजतं पश्यामी'ति धिय इत्यर्थः । अपरोक्षत्वे इति । विषयगतापरोक्षतासमर्पणे विषयगतापरोक्षत्वे वेत्यर्थः ।

मूलपृष्ठम् २३—साकारवादप्रसङ्गेनेति । साकारवादस्योपपादनं निराकरणञ्च मया दर्शितं दर्शनसर्वस्वे कणेहत्य दर्शनीयम् । ननु व्यावहारिकस्थले ज्ञानसाकारता सर्वथैवानुभूतिपथं नावतरतीति सत्यम्, प्रातिभासिकस्थले तु बाह्यार्थ एवानुभूत्या न स्पृश्यत इति वैपरीत्यमेवेति किमिह श्रुतियुक्त्युपन्यासः करिष्यति, एवञ्च प्रातिभासिकस्थले स्वीकृतापि ज्ञानसाकारता व्यावहारिके प्रसरन्त्यनुभूत्यैवापाकरिष्यत इति चेदत्रोच्यते, स्वप्नादावनुभूयमानो हस्तपादाद्यात्माऽऽकारो न तार्किकरीत्याऽमूर्तस्य ज्ञानस्य सम्भवति, योगाचाररीत्या तु स्यात्, स्याद्यदि ज्ञानस्य द्रव्यत्वम्, किन्तु जन्यद्रव्यस्य लोके परिणाम्युपादानसापेक्षताया दृष्टाया अवधीरयितुमनुचितत्वेन समनन्तरप्रत्ययस्य च क्षणिकतया निरन्वयनाशितया मात्रयाऽपि स्वोत्तरप्रत्ययेऽनुवर्तितुमनर्हत उपादानत्वासम्भवेन कथं कस्यचित्प्रत्ययस्य जन्यद्रव्यत्वम् । न च योगिनः सङ्कल्पमात्रप्रसूते वस्तुनि व्यभिचारेण न भावकार्यस्य सोपादानत्वनियतिरिति वाच्यम्, तत्रापि प्रकृत्याऽऽपूरन्यायेन सोपादानताया अत्यागात् । वेदान्तिरीत्या तु यद्यपि साक्षिणो निराकारस्य नासावाकारः शक्यवचनः, तथापि वृत्त्यात्मकज्ञानस्य द्रव्यतया तदीयोऽसावाकार सम्भाव्येत, तत्रापि तु मनोवृत्तेर्ज्ञानात्मिकायाः प्रमाणायत्ताया एवाभ्युपगमेन स्वप्नादावविद्याया एवासौ स्यात । प्रक्रियाऽऽग्रहिलतात्यागेन मनोवृत्तिर्ज्ञानात्मिका प्रमाणायत्तेवेत्यनुपगमेऽपि शक्तिविशेषस्यैवासौ चमत्कार इति निर्णयो मानसं स्पृशत्येव, शक्तिश्चासौ स्वरूपतिरोधायकतयाऽविद्याशब्देनोच्यतां शब्दान्तरेण वेत्यत्र नाग्रहः ।

न च तत्र चमत्कारद्वयमनुभूयते येन वृत्तिस्तत्र पृथगुररीक्रियेत, मूर्तिमती वृत्तिरेवाकार इति तु स्वपरिभाषयाऽभिधीयमानं न नो दुनोति । ज्ञानमेव तत्रोत्पद्यते न तु विषय इति मतापहस्तनं हस्ताद्याकारस्तत्र नैवास्तीति भ्रमापगमायैव । मूर्तिस्तु प्रतिभासमात्रप्राणैवेति तस्याः प्रतिघातजनकत्वं न देशनीयम्. व्यावहारिक्या एव हि तत् । एवञ्च शक्तेः स्वरूपतिरोधायकतामादायाविद्याशब्दव्यपदेश्यत्वे तदाकारो न ज्ञानाकार इति वक्तव्यः । एवमेव प्रतिभासशक्तिरिति मायेति च व्यपदेशोऽपि । प्रतिभासानुकूला हि सा, न तु प्रतिभासात्मैव । न चैवं यदनुकूला सा, तस्य प्रतिभासस्याप्युत्पत्तिरिह वक्तव्येति साम्प्रतम्, प्रतिभासानुकूलत्वस्य साद्यात्मकप्रतिभासे कल्पिततत्तद्विषयितानुकूलतायामेव पर्यवसन्नत्वात् । अथ लौकिकप्रयोगैर्मायाशब्दस्यासम्भावितविचित्रार्थप्रदर्शकशक्तिविशेषार्थकत्वे स्यादेवम्, 'माया वयुनं ज्ञान' मित्यभिधानादरे तु प्रकृते ज्ञानाकारोऽपि व्यवह्रियतामिति चेत्कचिज्ज्ञाने मायाशब्दप्रयोगेऽपि शक्तौ निरुक्तज्ञानानुकूलताया एव वक्तव्यत्वात्, कारणान्तरकल्पनापत्तेस्तत्र जन्यज्ञानत्वासम्भवात्, नित्यज्ञानतायाश्च ब्रह्मण्येव क्लृप्तत्वात् । एवञ्चागन्तुकदोषसचिवाविद्यया साद्ये्यदं शैवं वपुरिति स्वप्नेऽवभासते, तादृशाविद्यैव वा साक्षिणा तदाकारेण भास्यत इत्युभयत्रार्थाविशेष एव, भासत इत्यस्य हि तार्किकरीत्या विषयताश्रयत्वं नार्थः, अपि तु भानाभिन्नत्वम्, भानस्फुरणप्रकाशभासनादिशब्दानां चैतन्यबोधकत्वात् । न च स्वप्ने जाग्रतीव कश्चिच्छुक्त्यादिरधिष्ठानतावच्छेदकोऽर्थो येन सादृश्यात् तदाकारग्राहितैव वृत्तेः प्रातिभासिकाकारग्राहिता न तु प्रातिभासिकाकारः पृथगिति शङ्कितुमपि शक्येत, स्वप्न आगन्तुकचमत्कारविशेषसिद्धौ तु जाग्रत्यपि तथा कल्पनमौचित्यानीतम्, अन्यथाख्यात्युपगमस्यानुभवैकशरणैस्तिरस्कृतत्वात्, सर्वथापि प्रसिद्धो ज्ञानसाकारतापक्षो नात्र पुरस्कर्तव्य इति ।

शङ्खप्रतीत्यापत्तेश्चेति । यदि तु नीलपीताद्युपनेत्रस्थलीयानुभवमनुसृत्य पित्तस्थलेऽपि नयनरश्मावेव कश्चिद्विशेषो जायते व्यावहारिकः, अथवोपनेत्रगतमेव नेत्रपटलगतपित्तगतमेव च रूपमन्यनिष्ठत्वेन गृह्यते, न तु विषयसंलग्नं वस्तुतः किञ्चित्, न वाऽऽलोक एव तत्र कश्चिदतिशयः, येन परस्यापि तद्ग्रहणमापद्येतेति निगद्यते, तदापि विषयनिष्ठत्वेन प्रतीतेः को विषयः ? नहि तदलीकं प्रत्यक्षानुभवगोचरत्वात्, किन्तु मिथ्यैवेति तत्संसृष्टस्यापि तथात्वम् । व्यावहारिकस्यापि प्रातिभासिकः संसर्गश्चेदनुमन्यते तदापि तावन्मात्रस्योत्पत्तिरावश्यिकेति । **नाविद्यमानभानस्य दोषबलादप्युपपादनसम्भव इति** । इन्द्रियसन्निकर्षरूपसामान्यकारणमपास्य दोषरूपविशेषकारणस्य न फलार्जकत्वसम्भवः, अन्यथाऽन्यत्रापि सामान्यसामग्रीं विना विशेषसामग्री सम्पादयेत्कार्यम् । ननु कार्यकारणभावानामननुगमेन यत्र यथोचितं तत्र तथा स्वीक्रियताम्, प्रकृते तु पुरोवर्तितादात्म्यापन्नतयैव रजतस्य भानेन पुरोवर्तिसन्निकर्ष एवेन्द्रियस्यासन्निहितरजतभासने दोषसहकार्यस्तु, न च तथापि रजतसंसर्गस्यानलीकताध्रौव्येणानुपदोक्तरीत्योत्पत्तिरावश्यिकीति प्रतिकूलप्रसङ्ग इति वाच्यम्, संसर्गमात्रोत्पत्तेरुपगमे हानेरभावात्, दुराग्रहाणां त्याज्यत्वात्, स्वप्ने तु संसृष्टानामप्यनुपदोक्तरीत्योत्पत्तिरस्तु, जाग्रत्यपि संसृष्टोत्पत्तिपक्षेऽपि रजतं पश्यामीति प्रत्ययस्य प्रमात्वं न कदापि त्याज्यमितीदंतादात्म्यविशिष्टतया प्रथमानरजते चाक्षुषत्वमिदमर्थेन्द्रियसन्निकर्षादेव वक्तुमुचितम्, कार्यकारणभावानां फलबलकल्प्यत्वात्, एवञ्च रजतसंसर्गमात्रोत्पत्तावपि रजतं

पश्यामीति प्रतीतिरित्थमेवोपपाद्या, दोषशक्तिस्तु संसर्गोत्पादनेनैव चरितार्थेति चेन्न, स्वप्ने व्यावहारिकाधिष्ठानतावच्छेदकाभावेनोक्तरीत्या संसर्गस्येव संसर्गिणोऽप्युत्पत्तिसिद्धौ पश्यामीति प्रतीतेरुक्तरीत्योपपादनासम्भवेन प्रकारान्तरेणावश्यमुपपादनीयत्वे जाग्रति रजतं पश्यामीत्यस्यापि तथैवोपपादनौचित्येन तादृशप्रतीतिमहिम्ना रजतोत्पत्तेर्दुर्निवारत्वात्। किं तत्प्रकारान्तरमिति चेत्, चक्षुरिन्द्रियजन्यबोधे इव साक्ष्यात्मकान्तरबोधेऽपि दोषसचिवे पश्यामीति प्रतीतिविषयतावच्छेदकधर्मसद्भाव इत्येव, कोऽसौ धर्म इतिचेद् विषयिताविशेष एव, चाक्षुषत्वादेरपि विषयिताविशेषात्मकताया एव नव्यैरुपगमात्।

ननु मानसे बोध एवायं धर्मः स्वीक्रियताम्, स्वप्ने दृश्यमाना चमत्कृतिः परिणतिर्मनस एवास्तु, न हि ज्ञानात्मा मानसी परिणतिरज्ञाननिवर्तनैकनियता प्रमात्मैवेति भगवतो भवस्य नियतिर्येन ज्ञातैकसति वस्तुनि सा तिरस्क्रियाहैव स्यात्, एवञ्च ज्ञानसाकारताप्यत्र सूपपन्नैवेति चेदुक्तमत्रैकैव चमत्कृतिरनुभूयत इति, एवञ्च यदि मनसो दृश्याकारधारितैव तदोक्तधर्मस्य कथं तत्र सद्भावः, नच मनसः स्वभावतो ज्ञानात्मता येन तदाकारो ज्ञानाकारः स्यात्, न चानुभवाभावेऽपि मनसो वृत्तिस्तत्र प्रयोजनविशेषस्यान्यथाप्युपपत्तौ शक्या कल्पयितुम्, अज्ञानस्य निवृत्तिस्तावत्तत्र प्रयोजनमेव न, तस्याप्रसक्तत्वात, नापि स्मृतिस्तत्र समाधेर्वक्ष्यमाणत्वात्। शक्तिविशेषस्य तत्तच्चमत्काराणां मनसाऽसम्भाव्यानामपि कृतेऽवश्यं क्लृप्तत्वाच्च। यादृशनिद्रादिदोषबलान्मनसा तत्रोत्सहनीयम्, तस्यापि शक्तिविशेषीयावस्थाविशेषत्वाच्च। मनसोऽपि तथात्वाच्च। एवञ्च संस्कारद्वारा स्वाप्नसंसारोपकर्तुश्चेतसोऽहमर्थघटकतयोक्तधर्मावच्छिन्नस्वप्नबोधनधुरन्धरसाक्षितादात्म्यस्य पश्यामीतिप्रतीत्याऽर्पितस्याश्रयकोटिनिक्षिप्तता न तु तादृशधर्मावच्छिन्नतेति। किमुक्तं भवति, अविद्या जननी मनसे पुत्राय चित्राण्युत्पाद्य दर्शयति साक्षिद्वारा, मनस्त्वहमर्थपुच्छलग्नतयेव पश्यतीति। एतावता—दोषबलादेवापरोक्षज्ञानोत्पत्तिरस्तु तेन पश्यामीतिमतेः प्रमात्वं सूपपादमिति शङ्का दूरापास्ता, हस्तपादाद्याकृतेरेवानुभवसिद्धत्वात्, तदनुभवस्य च नित्यस्यानुत्पत्तेः, विषयितास्थानीयतादात्म्यसम्बन्धेन तादृशाकृतिविशिष्टतयैव तदुत्पत्तेश्च प्राप्ताप्राप्तविवेकन्यायेन संसर्गसमेततत्तादृशाकृत्युत्पत्तावेव पर्यवसायित्वादिति। ननु स्मृतिस्थलेऽपि दृश्यत एवाकृतिः, अस्फुटेत्यन्यत्, एवञ्च तत्रापि तदुत्पत्तिस्वीकारापत्तिः, स्फुटत्वस्याप्रयोजकत्वात्, स्वप्नश्च स्फुटावभासा स्मृतिरेवास्तु, अत एव न तत्र स्मरामीत्यनुभवप्रसङ्गः, अस्फुटावभासस्मरण एव तथानुभवात्, अप्रसिद्धविशिष्टविषयकस्वाप्नदर्शनस्यापि खण्डशः संस्कारैरेव निर्वाहसम्भवः, भ्रमत्वं तु देशकालादिसंसर्गांशे, एवञ्च स्मृतिरेव दशाविशेषे साक्षात्कारित्वमालम्बत इति मतं रमणीयमेवेति चेन्न, स्मरामीत्यनुभवाभावेऽपि स्फुटावभासस्य साक्षात्कारित्वाख्यविषयिताविशेषात्मकस्य स्मृतावभ्युपगमे प्रमाणाभावात्, संस्कारजन्यत्वमात्रेण स्मृतित्वपरिभाषाया अप्रयोजकतापराकृतत्वात्, स्मृतिरेव दशाविशेषे साक्षात्कारिणीत्यस्य तु रागादिना निरन्तरस्मरणधारायामुत्पाद्यमानायामन्ते साक्षात्कारात्मको भ्रमो जायते इत्यर्थो न तु स्मृतावेव कदाचित्साक्षात्कारित्वम्, पूर्वस्मृतेर्नष्टत्वात्। स्मृतावप्यस्फुटाकृत्युत्पत्त्युपगमे तु न कामपीदानीं हानिं जानीमो विना निभालयामीत्यनुभवाभावम्। तादृशानुभव एव च जीवातुरनिर्वचनीयोत्पत्तिवादस्य।

ननु साक्षिणोऽनुव्यवसायस्थानीयतया पश्यामीत्यनुभवः साक्षी न तु तद्विषय इति

कथमुच्यते तद्विषयतावच्छेदकधर्मसद्भावः साक्षिणीति, एवं ह्येकत्र विषयविषयिभाव उपगतः स्यादिति चेद्रूपभेदेनैकत्र तदुपगमे का क्षतिः, आकारनिरूपिततादृशविषयिताविशेषविशिष्टतया विषयत्वम्, अविद्यावच्छिन्नचित्त्वेन च विषयित्वम्। अन्यथा*ऽऽकारदर्शनस्येवाकारदर्शनदर्शनस्यापि भ्रमत्वं वाच्यं स्यात्। नन्वेतदपेक्षयाऽविद्यावृत्तावेव तादृशधर्मोऽस्तु, तदवगाहिता तु साक्षिणि, एवञ्च वृथेदमवाचि चमत्कृतिद्वयी नानुभूतिपरिचितेति, द्वितीयचमत्कृतेः पश्यामीतिमत्यैवानीतत्वादिति चेन्नूनमनूनं नोक्तम्, अन्यदपि वक्तव्यमासीदिह, तथाहि साक्षिण्येव दोषसचिवेऽसन्निहितरजतविषयिताऽस्तु, तस्या रजततादात्म्यस्य चोत्पत्त्यैवानिर्वाच्यख्यातिरत्रानुपप्लुता, स्वप्ने पुनः सर्वथैव विजृम्भतां सा, बाह्यस्थले हि पुरोवर्तितादात्म्येनासन्निहितस्य तत्समानाकृतेः साक्षिणा पुरोवर्त्याकारवृत्तिद्वाराऽवगाहने बाधकाभावात्, इदं रजतमित्यनुभवस्य रजतमात्रविषयितायाः पुरोवर्तिमात्रविषयिताया वाऽभावेनावश्यं कस्याश्चिद्वृत्तेरुभयविषयिताया वक्तव्यत्वात्. रजतस्योत्पत्तिपक्षे तत्संसृष्टतया पुरोवर्तिनोऽपि प्रातीतिकत्वेनाविद्यावृत्तिविषयत्वमित्यभिधानं हि न हृदयङ्गमीभवति, प्राप्ताप्राप्तविवेकेन रजततत्संसर्गयोरेव प्रातीतिकत्वात्, अन्यथा व्यावहारिकपुरोवर्तिसंसृष्टतया रजतस्यापि व्यावहारिकत्वेन मनोवृत्तिविषयत्वमित्येव किन्नोच्यते. न चासन्निहितरजतभाने भ्रमबाधयोर्भिन्नविषयकत्वरूपवैयधिकरण्यप्रसङ्गः, भ्रमविषयस्यैव निषेध्यतया बाधविषयत्वौचित्यात्। बाधो हि नेदं रजतमिति तादात्म्याभावावगाही वा, नात्र रजतमित्यत्यन्ताभावावगाही वा, आद्ये नाप्रसक्तप्रतिषेधः, तादात्म्यस्य पुरोवर्तिरजतयोर्भातत्वात्:. नापि द्वितीये सः, भूतलादौ रजततादात्म्यापन्नपुरोवर्तिप्रसक्त्यैव रजतप्रसक्तित्वात् तत्र तन्निषेधसम्भवात्, नहि शुक्तावेव रजतनिषेधो बाधेनावगाह्यते न तु भूतले इति सशपथं वक्तुं शक्यते, नचेदं रजतं स्वानामीति पुरोवर्त्यवच्छिन्नचित्तादात्म्यविशिष्टरजतनिष्ठतया ज्ञायमानविषयत्वस्याश्रयान्तरासम्भवेन रजतोत्पत्तिसिद्धिरिति वाच्यम्, अतीतानागतयोरपि विषयतानुभवेन साम्यात्, तयोर्यदि केनचिद्रूपेणेदानीं सत्तया विषयताश्रयत्वसम्भवस्तदाऽसन्निहितरजतस्यापि क्वचित्सत्तया तथात्वसम्भव इति तुल्यम्, असन्निहितमपि हि रजतं पुरोवर्त्यवच्छिन्नचित्तादात्म्येन प्रातिभासिकेन विशिष्टं सम्भवत्येव। ज्ञानस्य विषयशूरता च नैतावता विशीर्णा। संसर्गः संसर्गिद्वयं चेति सकलस्यैव विषयस्य सद्भावात्। न च पुरोवर्तिचित्तादात्म्यरूपविषयतावच्छिन्नं यद्रजतचित्तादात्म्यरूपविषयत्वं तदाश्रयत्वमसन्निहितरजते न सम्भवति, शुक्त्याद्यवच्छिन्नचिति जातरजतस्यैव हि चित्तादात्म्यं शुक्तिचित्तादात्म्येनावच्छिद्यते, अन्यथाऽतिप्रसङ्गात्, एवञ्चेदृशयुक्त्या परोक्षभ्रमेऽपि विषयोत्पत्तिः प्राप्यत इति वाच्यम्; ईदृशनियमकल्पनाया वासनामात्रमूलकत्वात्, यदवच्छिन्नचिति यज्जायते यदवच्छिन्नचित्तादात्म्यरूपविषयतावद्यद्भवतीति यावत, तदवच्छेदेन चिति तत्संसर्गो जायते, एतावतैव चिति तद्द्वयतादात्म्ययोरवच्छेद्यावच्छेदकभावोऽप्यनुभूयत इत्यस्यापि सुवचत्वात्। न चैवं परोक्षभ्रमे संसर्गभिन्नविषयोत्पत्तिर्न सिद्ध्येत्, मा सैत्सीत्, न वयं व्यसनिनस्तदुत्पत्तिसाधने, यावत्प्रमाणबलं यत्र कचिद्यत्किञ्चिदुत्पद्यत इत्येवाचक्ष्महे इति।

ननु सुन्दरमेवैतदिति काऽत्रानुपपत्तिः। ननु बीजमपि किमिह। अन्यथैव कथञ्चिन्नि-

* उक्तरीत्या न मनोवृत्तिर्वक्तव्यरीत्या च नाविद्यावृत्तिः प्रातिभासिकदर्शनमिति शक्यमपि न चेत्तथा, तदा प्रातिभासिकदर्शनाभाव एव पर्यवसन्न इत्याशयेनाह अन्यथेति।

र्वाहे गौरवपराहता रजतोत्पत्तिरित्येवेति चेन्नतु कथञ्चिदन्यथैव निर्वाहेऽविद्यावृत्तिरपि गौरव-पराहतेति तुल्यम्। तत्किं त्यक्तैव रजतोत्पत्तिः? न नः किञ्चिदपचीयते तत्त्यागे, जाग्रद्दर्शना-न्तराणां स्वाप्नबोधानां चाननुरोध एव तु परं दूषणमिहेति।

रजततादात्म्यापन्नेदमाकारवृत्तिनाशे इति। रजततादात्म्यापन्नेदमाकारसंस्कार-लाभलोभेन रजतस्य तत्तादात्म्यस्य च नाशे तदवच्छिन्नसाक्षिनाशोक्तिर्नादृता, इदंतादात्म्या-पन्नरजतस्य नाशे तदवच्छिन्नसाक्षिनाशोक्तिस्तु स्यात् तादृशसंस्कारलाभात्। परन्तु वृत्तेरपि स्मरणेन तद्विषयसंस्कारस्याप्युपार्जनीयतया तदवच्छिन्नसाक्षिनाशपर्यन्तमवश्यं धावनीयम्, विषयविशेषितवृत्तिसंस्कारस्य विषयात्मकविशेषणगोचरत्वं चोचितमेवेति वृत्त्यंशे संस्कारप्रमोष-स्थले केवलविषयस्यापि स्मरणं निरुपप्लवम्। न च रजततादात्म्यापन्नेदमाकारवृत्ते रजतता-दात्म्यगोचरत्वे स्याद्प्येवं रजततादात्म्यापन्नेदमाकारसंस्कारलाभः, इदम्मात्रसंस्पर्शितायां तु कथमेवमिति वाच्यम्, अनुपदं प्रतिविधास्यमानत्वात्। रजतसंसृष्टतयेदमर्थस्यापि प्रातीति-कत्वेन तन्नाशोक्तिस्तु नैवादर्तव्या, तस्या रजततत्संसर्गयोः प्रातीतिकत्वं तयोरेव च नाश इत्यंशेऽधिकार्थासमर्पकत्वात्। वस्तुतस्त्वेवं विवेके क्रियमाणे विषयावच्छिन्नसाक्षिनाशोऽपि विषयनाशे एव न न पर्यवस्यति। एवञ्च ज्ञाननाशस्येव विषयनाशस्यापि संस्कारकारणत्वमि-त्यपूर्वकल्पनामपास्याविद्यावृत्तिरेव कुतो नोपेयते, नच—तस्या रजतमात्रगोचरतया 'इदं रजत'मितिज्ञानाकारो न स्यात्, रजतसंसृष्टतयेदमर्थस्यापि प्रातीतिकत्वस्याप्रामाणिकत्वेन तद्विषयकत्वस्याविद्यावृत्तावसम्भवात्. इदमाकारवृत्तौ तु मानस्यां रजतविषयकत्वमशङ्कनी-यमेव, तस्या अज्ञातगोचरत्वात्, इदमिति रजतमिति वृत्तिद्वये दिदन्त्वावच्छिन्नविषयिता-निरूपितरजतत्वावच्छिन्नविषयिताशालिसंस्कारार्पकत्वं न सम्भवत्येव, ज्ञानद्वयीयविष-यितयोर्निरूप्यनिरूपकभावासम्भवादिति—वाच्यम्, यदि हि बलवता प्रमाणेन मनोवृत्ते-र्ज्ञानात्यर्थभूताया अज्ञातमात्रगोचरत्वं निर्णीयते तदेदृशस्थले प्राभाकरवज्ज्ञानद्वयीयविषयित-योरपि निरूप्यनिरूपकभावमभ्युपेत्य तादृशसंस्कारसमर्थनमर्थ्येताम्, प्राभाकरेणैवं किञ्चित्सा-म्येऽपि रजततत्संसर्गाविद्यावृत्तीनामुत्पत्त्युपगमेनैव तन्मतप्रवेशासम्भवात्। तस्मात् किमिह तत्त्वमिति? उक्तमत्र मनोवृत्ते र्ज्ञानात्मनोऽज्ञातमात्रगोचरत्वं प्रमात्वं चेति नियतौ न सन्तो-षावहं मानमिति तयैवेदं रजतमित्याकारधारिण्याऽभीष्टसंस्कारोत्पत्तिरिति। तादृशनियतौ सन्तुष्टं प्रत्यपि किञ्चिद्वाच्यमेवेति चेदुक्तप्रायमत्र यत्प्रतिभासमात्रप्राणतया तत्समशीलत्वमेव प्रातिभासिकतया प्रथितचमत्कृतेरिति व्यावहारिकविषयनाशस्य संस्कारका-रणत्वाभावेऽपि तन्नाशस्य तथात्वमसम्भव इति।

अत एव तस्याः सर्वथैव ज्ञानात्मकतामपि केचिद्भ्रान्त्या प्रतिपेदिरे. हस्तपादाद्याकारमनु-रुन्धानैः परमस्माभिः किञ्चिदमूर्तज्ञानवैलक्षण्यमपि तत्रादृतम् न च विषयत्वं किञ्चिदनुगत-मनतिप्रसक्तं येन तदवच्छेदेन संस्काराजनकत्वं निर्धारितमपि स्यात्, वृत्तेरपि साक्षिविषय-त्वेन तन्नाशस्यापि संस्काराजनकत्वप्रसङ्गात्, वृत्तिभिन्नत्वविवक्षया तु प्रोक्तचमत्कृतिभिन्न-त्वविवक्षा स्पर्धते, तस्मात्स्वभाव एवात्र भगवान् शरणं यद्विषयोऽपि कश्चित्संस्कारमाधत्ते कश्चिन्नेति। अवश्यं चैवमनुमन्तव्यम्, कथमन्यथावृत्तिविषयकसंस्कारसिद्धिः, तद्भासकस्य शाश्वतत्वात्, वृत्तिविशिष्टतन्नाशस्य च विशिष्टे विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायेन वृत्तिनाशे एव पर्यवसन्नत्वात्, कथञ्चिद्वृत्तेः स्वविषयत्वस्य स्वभावविशेषस्य

वोपगमेन समाधानं तु मूर्तज्ञानात्मकरजततत्संसर्गयोरपि समम्। एवञ्चैतद्द्वयस्येदमर्थस्य च खण्डशः संस्कारैरेव विशिष्टस्मृतिप्रसवः। अपि वाऽत्रापि पक्षे नानाज्ञानीयानां विषयितानां संस्कारीयाणाञ्च निरूप्यनिरूपकता प्रग्वदेवोपासनीया। किञ्च मूर्तज्ञानस्यास्य व्यावहारिके-दमर्थसंस्पर्शोऽपि वक्तव्य एवानुभवबलात्। अतिरिक्ताविद्यावृत्तिकल्पेऽपि वृथाऽऽग्रहं परित्यज्य केनापि रूपेण चेदमर्थस्य प्रातीतिकत्वमनादृत्य तद्विषयकत्वं तस्यामनुभवादेव माननीयं मन्यामहे। न हि केवलेदमर्थस्याविद्यावृत्त्यविषयत्वे प्रातिभासिकविशिष्टतयाऽपि तस्य तथात्वं शिवशासनाऽऽम्नातम्। इदमर्थाज्ञानस्य चाविद्यावृत्त्यनाश्यत्वेऽपि प्रागधिष्ठानज्ञान-विषयाऽपेक्षणीयेदमाकारमनोवृत्त्यैव नष्टत्वान्न काचित्क्षतिः। नानाज्ञानैस्तु निर्वाहेऽगति-कगतिरेवेति।

तदेवं रजताद्याकारसंस्कारकारणतावच्छेदकं तज्ज्ञानत्वं तदीयासत्त्वापादकाज्ञानविरोधि-विशिष्टचित्त्वरूपं रजतादिविशिष्टचिति निरुपद्रवम्, विषयतया विषयतावच्छेदकतया वाऽज्ञानं प्रति रजतादेः स्वयमेव सुखादिवत्तादात्म्येन विरोधित्वात्, न च घटादावज्ञातसति तादृशविरोधित्वं प्रमाणाऽऽम्नातं येन तत्रापि वृत्तिस्वीकारतिरस्कारप्रसञ्जनेन प्रत्यवस्थेयं स्यात्।

एतेन—"वृत्तिसंस्कारस्यानुमित्यादिरूपवृत्तिजन्यसंस्कारसाधारणेनाकाराख्यगौण-विषयितासम्बन्धेन नव्यवेदान्तिसम्मतेन व्यावहारिकरजतादिविशिष्टसंस्कारत्वेन रूपेण स्मृति-कारणतायाः क्लृप्ततया तयैव प्रातिभासिकरजतादिस्मृतिरपि निर्वाहयितव्या, अन्यथा रजतावच्छिन्नचित्त्वेन चितः सूक्ष्मावस्थारूपसंस्कारसम्भवेऽपि तस्यां रजतादितादात्म्यरूपरज-तादिविषयकत्वसम्बन्धेन कारणताकल्पने गौरवात्, न चोक्तसूक्ष्मावस्थारूपसंस्कारकाले रजतादेरभावेन तादात्म्यासम्भवमेव न भणसि कुतः?, रजतादितादात्म्यापन्नचित्परिणाम-रूपोक्तावस्थायां रजतादिनाशात्मकसूक्ष्मावस्थायास्तादात्म्यस्यैव रजतादितादात्म्यत्वव्यपदेशात्, अवस्थातद्वतोरत्यन्तभेदाभावात्, तथा च गौरवमेवेति–नाशङ्कनीयम्। रजतावच्छिन्नचितो-ऽपि चित्त्वेन नित्यतया तदीयसंस्कारस्थानीयसूक्ष्मावस्थाया रजतनाशात्मकसूक्ष्मावस्थाया-मेव पर्यवसायितयाऽचिदात्मकत्वेन रजततादात्म्याभाजनतया तादृशविषयत्वेन कारण-ताकल्पनानुपपत्तेर्मूर्तज्ञानात्मकरजतनाशरूपसूक्ष्मावस्थाव्यपदेशपात्रसंस्कारेषु गौणाकारा-ख्यविषयितयैव रजतादिवैशिष्ट्यस्य वक्तव्यत्वात्। अन्यत्र घटविषयकज्ञानीयसंस्कारेषु घटाकारत्वदर्शनेनात्र कथं रजतविषयकमूर्तज्ञानात्मकरजतीयसंस्कारेषु रजताकारत्वमिति तु वृत्तिविषयकसंस्कारचर्चयाऽनुपदं निरुक्तोत्तरम्।

अत्र चित आध्यासिकतादात्म्योपगमावश्यकत्वेऽपि रजताकारा वृत्तिरितिवद्रजताका-रा चितिरिति व्यवहारबलादाकाराख्यसम्बन्धोऽपि कुतो नोपेयताम्, तत्तदाकारेण चैतन्यमेव प्रथते माययेत्यादिव्यवहारस्याप्रामाणिकत्वोक्तेरप्रामाणिकत्वात्। न चैवं सर्वत्रैव वृत्ति-वैयर्थ्यम्, अज्ञाननिवृत्त्यर्थं तस्या आवश्यकत्वात्। न च घटाकारा चितिरित्यादौ तादात्म्य-मेव चितेर्भासत इति भाषणीयम्, सम्बन्धान्तरपरतया कथञ्चिद्व्याख्यानस्य घटाकारा वृत्तिरित्यादावपि शक्यत्वात्, अनिर्वचनीयो हि वृत्तेराकाराख्यः सम्बन्धो घटादावुपगतो ननु चितिव्यावृत्तलक्षणकः, लक्षणानां दुर्निरूपत्वात्, अनिर्वाच्यश्चासौ न चितेरपि न सम्भवतीति तु वचनीयतां नार्हति। चित्तादात्म्यस्यावश्यकत्वेन चिदाकारतायास्तदतिरिक्ताया

अप्रामाणिकत्वात्, तत्तदाकारेण भासते चितिरित्यादौ तत्तद्रूपेण तत्तत्तादात्म्येनेत्येव प्रतीतेः प्रमात्वात्, चितेराकारान्तरानुपपत्तेः; वृत्तेस्तु परोक्षापरोक्षसाधारण्या आकाराख्यः सम्बन्धः संयोगाद्यात्मकतामवाप्तुमप्रभविष्णुतयाऽतिरिक्तोऽनिर्वचनीयो यः कोऽपि भवतु नाम, वृत्तितादात्म्यस्य घटादावप्रामाणिकत्वात्तु न स तदात्मापीति।

तस्मात्पक्षपातेनेवाविद्यावृत्तिमपि विदूरीकृत्य साक्षिणा स्वोत्सङ्गमिवानीय दर्शितेयं प्रातिभासिकी चमत्कृतिर्विचारकैश्चेतसाऽऽस्वाद्यतामिति। नन्वेवं साक्षिण एव तत्प्रतिभासतया प्रतिभासनिरूपितकालिकसमव्याप्तिमादाय तस्याः प्रातिभासिकत्वं न स्यात्, नाप्यागन्तुकदोषप्रयुक्तभानत्वमादाय, भानस्य नित्यसाक्षिरूपतया दोषाप्रयुक्तत्वादिति चेन्न, मूर्तप्रतिभासात्मकतया प्रातिभासिकत्वोक्तेरुक्तप्रायत्वात्। तादृशदोषजन्यत्वं तादृशदोषजन्यविषयिताकत्वं निर्विशेषब्रह्मबोधातिरिक्तबाध्यत्वं चादायापि तत्सम्भव इति।

अत्र साकारवादप्रसङ्गे नेति प्रतीकस्थराजहंसादारभ्य पुनः पुनरुत्पतन्त्या अविद्यावृत्तेर्निराकृतिरियं समूर्तप्रतिभासात्मचमत्कृतिः प्रसिद्धप्रक्रियाविक्षेपकतया किञ्चिदुच्छृङ्खलापि महाभाष्योक्तं महतो वंशस्तम्बाल्लट्वानुकर्षणन्यायमनुहरन्त्यपि विचारधाराधाराधरायमाणतया सुधिया धियाऽनुराधनीयैवेति।

धर्माणां व्यावहारिकाणामेव प्रातिभासिके भानोपगमादिति। अन्यथा व्यावहारिकरजतत्वप्रकारकेच्छाधीनप्रवृत्त्यनुपपत्तेः, रजतादिशब्दानां प्रातीतिके प्रयोगानुपपत्तेश्च। अथ व्यावहारिकस्योभयानुगतधर्मस्यागन्तुकदोषजन्यतावच्छेदकत्वासम्भवः, न च सामानाधिकरण्यकालिकाभ्यां दोषविशिष्टत्वस्यैव तथात्वम्, कालिकनिवेशाच्च न नित्यसाधारण्यम्, नित्यस्य महाकालवत् स्वभावतोऽपि, नित्यमहाकालं प्रति नित्यतया व्यावर्तकत्वानुपपत्त्या च कालोपधिविधयाऽपि,कालत्वानाक्रान्ततया कालानुयोगिकत्वनियतकालिकसन्बन्धविशेषानुयोगित्वानुपपत्तेरिति वाच्यम्, उक्तसम्बन्धद्वयेन दोषविशिष्टत्वस्य वा कालिकेन घटत्वविशिष्टसामानाधिकरण्येन च दोषविशिष्टं यत्तत्त्वस्य वा तथात्वमित्यत्र विनिगमकाभावात्, दोषस्येव घटत्वस्याप्युक्तयुक्त्या नित्येषु कालिकेनासम्भवेनेदृशनिवेशनापि नित्यवारणासम्भवादितिचेन्न, घटत्वस्थाने पटत्वादेरपि प्रत्येकं निवेशप्रसङ्गेनानन्त्यप्रसङ्गदौःस्थ्याद्दोषस्योपस्थितत्वाद् द्वितीयसम्बन्धे कॢप्तत्वाच्च कालिकेनापि तद्विशिष्टताया एव निवेशनीयत्वात्। न च कालिकसम्बन्धवृत्तित्वविशिष्टं यत्सामानाधिकरण्यसम्बन्धवृत्तित्व तद्विशिष्टोभयत्वं वा विशेषणविशेष्यभावे कामचारेण विपरीतविशिष्टघटितं वोभयत्वं सम्बन्धतावच्छेदकमिति कार्यताया अवच्छेदकभेदेन भेदापत्त्या रजतत्वस्यैव लाघवादवच्छेदकत्वमिति प्रातीतिकमात्रवृत्तिधर्मसिद्धिरिति वाच्यम्, अपूर्वरजतत्वकल्पनापेक्षया कॢप्तोक्तोभयत्वप्रयुक्तगौरवस्य सोढव्यत्वात्। वस्तुतस्तु सामानाधिकरण्येनैव दोषविशिष्टत्वं कार्यतावच्छेदकमस्तु नित्यसाधारण्येऽप्यवच्छेदकस्यातिप्रसङ्गाभावात् 'न किञ्चिदेकमेकस्मात्सामग्र्याः सर्वसम्भव' इति न्यायेन कार्यतावच्छेदकावच्छिन्नत्वमात्रापराधेनोत्पत्तिप्रसङ्गदानानौचित्यात्। न च प्रमाणव्यापारं विना प्रातीतिकनिष्ठतया व्यावहारिकधर्मस्य भानानुपपत्तिः, व्यावहारिकस्यापि धर्मस्य प्रातीतिकसंसृष्टतया तद्भासकभास्यत्वे बाधकानाकलनात्, एवञ्च प्रातीतिकमात्रे व्यावहारिकमात्रे वा वर्तमानं रजतत्वं न स्वीक्रियामर्हति, अपि तूभयानुगतं व्यावहारिकमेव। न च प्रातीतिकसाधारणस्यैव रजतत्वस्य कटकादिकारणतावच्छेदकत्वेऽतिप्रसङ्गः, व्यावहारिकवृत्तित्व-

विशिष्टस्यैव तस्य तथात्वात्। उभयानुगतं कार्यं तु प्रति शुद्धस्यापि कारणतावच्छेदकत्वे नातिप्रसङ्गः। न चोभयानुगतरजतत्वस्य व्यावहारिकत्वमेव किमिति, प्रातीतिकत्वमेव कुतो नेति शङ्केथाः, बह्वनुग्रहस्यैव न्यायसिद्धत्वात्, प्रायो व्यावहारिकमूलको हि प्रातीतिकाध्यास इति कॢप्ततापि तथात्वनियन्त्री। एवञ्च नात्र रजतमित्यादौ धर्मिमात्रस्य बाधो न तु धर्मस्यापीति शम्।

ननु ज्ञातैकसति सन्निकर्षस्यासम्भवेन तदायत्तविषयतामपर्यन्त्या रजतं पश्यामीति मितेर्भ्रमत्वापत्तिरत आह रजतं पश्यामीति धीस्त्विति।

मूल पृष्ठम् २४—तादृशधियोभ्रमत्वमेवेति। न चेदृशस्थले त्वयेव मया सर्वत्र तादृशधियो भ्रमत्वस्य सम्भवदुक्तिकत्वेन न तद्बलात्साधयितुमिष्टेन सन्निकर्षेण स्वाश्रयतयेह रजतसिद्धिसम्भव इति देश्यम्, अज्ञाननिवर्तकप्रत्यक्षस्येन्द्रियसन्निकर्षजन्यतायाः कॢप्ततयाऽत्र तत्त्यागेऽज्ञाननिवर्तकप्रत्यक्षत्वेन स्थातु तावन्नोत्सहनीयम्, स्मरामीत्यप्रत्ययेन स्मृतित्वस्य व्याप्त्याद्यादिप्रतिसन्धानासमवधानेनानुमिनोमीत्याद्यननुभवेन चानुमितित्वादेश्चेहाशङ्क्यतया यावद्विशेषबाधे सामान्यस्यज्ञानत्वस्यापि स्पर्शमनर्हन्ती रजतधीरधीरेवावधृता स्यात्। न चालौकिकसन्निकर्षजन्यतयैवाज्ञाननिवर्तकप्रत्यक्षता तत्रास्तामिति साम्प्रतम्, सौरभं स्मरामीत्येव प्रत्ययेन तादृशसन्निकर्षस्य प्रत्यक्षतानुपपादकत्वात्। अनिर्वाच्यवादे तु सा धीरज्ञाननिवर्तकप्रत्यक्षतामक्षममाणापि तदनिवर्तकप्रत्यक्षतयैवाऽऽलिङ्गिता साक्षितामक्षतामेवेक्षितुमीष्टे स्वस्मिन्, ज्ञातैकसत्त्वस्य स्वीकृतौ चेत्थं वक्तुं पार्यते नान्यथेति भावः। प्रागुदीरितरीत्या पश्यामीतिप्रतीतिविषयतावच्छेदकविषयिताविशेषस्याविद्यावृत्तौ दोषसचिवे साक्षिणि वाऽभ्युपगमे तु तादृशधियो भ्रमत्वं न क्वापि प्रसज्यत इत्यनुसन्धातव्यम्। ख्यातिवाद इति।

नैतच्चित्रं यदेकस्य पुंसः कृतिपरम्परा।
अप्रशस्ता प्रशस्ता च कालभेदेन जायते॥ ८॥
हीनोत्तमाः प्रजाः कुर्वन्नीश्वरोऽपि युगद्वये।
कालवीर्यानुमोद्येव किं पुनः प्राकृतो जनः॥ ९॥

तत्त्वं तूदीरितमेवानुपदम्। सर्वसाक्षितया ब्रह्मण्येवेति। विषयिता सप्तम्यर्थः; तथा च ब्रह्मविषयकग्रहे इति लभ्यते।

मूल पृष्ठम् २५—घटनादिभिन्नज्ञातैकसत्त्ववादे इति, ब्रह्मणि दृष्टिसृष्टिस्वीकारे शून्यवादप्रसङ्गस्य जीवेशविभागादौ तदुपगमे च सुषुप्त्यादावप्रतीतत्वेन तस्याविद्यमानतया पुनर्जागरितादौ मुक्तपुनरावृत्त्यादिप्रसङ्गस्य च दुर्वारत्वापाताद् भिन्नान्तम्।

वेदान्तप्रक्रियाग्रन्थेषु प्रथितो दृष्टिसृष्टिवादक्रमो यस्मै न रोचते, तत्प्रतिबोधनाय तदीयं प्रकारान्तरमुदीर्यते, प्रतिभासिकत्वेन प्रसिद्धे प्रपञ्चे तावदस्मदादेर्दृष्टिसृष्टिवादः, व्यावहारिकत्वेन प्रसिद्धे तु भगवतः सत्यसङ्कल्पतया तदीयेक्षणात्मकदृष्टिसमनन्तरमेव सृष्टिरिति तद्दृष्ट्यैव दृष्टिसृष्टिवादः, तदीयसृज्यमानजगदन्तर्गतास्मदादिसंघातदृष्ट्या तु सृष्टिदृष्टिवादः, कतिपयतदीयसृष्ट्यनन्तरमेवास्मदादिदृष्टेरुद्गमात्, तदीयकल्पनोपर्नातैव कालशक्तिरिति तद्दृष्ट्या क्षणमात्रेऽपि कालेऽस्मदादेः पूर्वापरीभावस्फूर्त्या व्यावहारिककार्यकारणभावानां

युगसहस्राद्यात्मककालानां चोन्मेषः, अत एवास्मदादेः पृथग्जनस्य दृष्ट्या जगति सत्यता, तद्दृष्ट्या तु काल्पनिकत्वमेव, कल्पनयैव स एकमपि क्षणमगणितयुगात्मनाऽगणितयुगानि चैकक्षणात्मना सूचीमात्रांश्च देशाननन्तयोजनात्मनाऽनन्तानि योजनानि च सूचीमात्रात्मना दर्शयति, अत एव तद्दृष्ट्याऽस्माकं भ्रान्तता, संकल्पानुरूपप्रदर्शनशक्तत्वमेव च तत्र सत्य-सङ्कल्पत्वं न तु त्रिकालाबाध्यवस्तूद्भावकत्वम्, स्वयमेव हि तस्य ब्रह्मात्मना त्रिकालाबाध्यता, नत्वन्यस्य, तदीयैश्वर्ये च कालत्वव्यापकत्वरूपं नित्यत्वम्, मायिके काले मायिकैश्वर्यस्य कदाप्यसम्भवाभावात्, तत्र कालानवच्छिन्नत्वरूपं नित्यत्वं तु नास्त्यौपनिषदप्रसिद्धरीत्या, वक्तव्यान्तरं त्वस्मिन् विषये वयमवोचाम सङ्क्षिप्य **दर्शनसर्वस्वे तदीयेराजहंसे** च, विस्तरस्य तु नायमवसर इति। निर्विशेषब्रह्मदृष्ट्या तु सर्वथैवाजातवाद इति। तदेवं वादत्रयस्यास्य समुच्चय एव न तु मतभेदेनोपन्यसनीयता। तत्राप्याद्यद्वये दृष्टिभेदेन व्यव-स्थितेऽपि पराकृतप्राकृतपरमतिः पुरुषोत्तमः पुरुषोत्तमस्य भगवतो दृष्टिसृष्टि स्वस्यैव पश्यतीत्यव्यवस्थयैव दृष्टिसृष्टिवर्णनं वेदान्तनिबन्धेषु, इममभिप्रायमनवगत्य च तन्निराकरणे प्रयतन्ते पर इति मननशीलैः शीलनीयम्।

**मूल पृष्ठम् २६—दोषादिसम्भावनामिति।** आदिना बाधग्रहो ग्राह्यः।

**इति खण्डनशारदायां प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डने राजहंसः**

**खण्डने शून्यतोत्सर्गेऽसतः कारणत्वे च शारदायां राजहंसः**

**मूल पृष्ठम् २८—सार्वदिकं स्यादिति।** भावाभावयोर्विरोधे तादृशाभावप्रतियोगिनो दण्डादे र्न कादाचित्कत्वमपि सम्भवति, अत एवेदमुपलक्षणमित्यादिनाऽनुपदं तर्कान्तरं वक्ष्यति, तयोरविरोधे तु सार्वदिकत्वमपि न वार्यत इति तत्त्वम्।

**खपुष्पं तु पक्षसममिति।** खपुष्पे सार्वदिकत्वाभ्युपगमेऽनुभवविरोध एव, स च दण्डादौ तादृशप्रतियोगित्वोपगमेऽपि तुल्यः, तदवधीरणे च खपुष्पेऽपि सार्वदिकत्वमुपेयता-मिति कथं त्वया व्यभिचारः शक्य उद्भावयितुमिति भावः।

**प्रागभावस्त्वप्रामाणिक इति।** वस्तुगतिर्गदितेयम्, तस्य प्रामाणिकत्वेऽपि भावत्व-स्यापादककोटौ प्रवेशेनैव व्यभिचारोद्धारात्।

**मूलपृष्ठम् २६—कादाचित्कयावत्कारणेति।** न च कार्योत्पत्तेः पुरैव कारणविशेष-ध्वंसे तल्लक्षणेऽतिव्याप्तिः; कारणत्वं हि नेह स्वरूपयोग्यत्वं प्रविष्टम्, तस्य भाव्यनन्तव्यक्ति-गतत्वेन सृष्टौ यावत्कारणप्रागभावानाधारसमयस्यैवाप्रसिद्ध्यापातात्, अपि तु स्वाव्यवहित-पूर्वत्वसम्बन्धेन फलविशिष्टत्वम्, उक्तकारणविशेषध्वंसस्थले तु फलस्यैवाप्रसिद्ध्या तद्विशिष्ट-त्वं दूरोत्सारितमिति।

**व्यवहारापलापापातादिति।** अत्र दूषणान्तराण्यपि क्रिययाऽयोगव्यवच्छेदेन सम्बन्धित्वरूपकारणत्वखण्डनशारदायामनुसन्धेयानि। उपपादितत्वाच्चेति। उपपादने बौद्ध-भूतत्वं विवक्षित्वेदम्। किञ्चेयं पङ्क्तिश्चतुर्थपरिच्छेदटीकोपनिबन्धनानन्तरमिह योजिता।

अनेकसामग्रीकत्वापत्तिरिति । ननु दर्शनसर्वस्वे विज्ञानवादे त्वदुदितानुभविक-रीत्या विशेषणविशेष्यभावकामचारप्रयुक्तविलक्षणसमुदायव्यवहारे बुद्धावेव कश्चिद्विशेषो न तु विषये, तावन्त एव हि पदार्थाः स्वतन्त्रप्रतिपत्तृसमर्पितेन विलक्षणविज्ञानमात्रप्राणेन विशेषण-विशेष्यभावेन भूषिताः, तथा च सामग्रीत्वानां बुद्धिविशेषात्मकतया नानात्वेऽपि सामग्र्येकै-वेति चेन्न, बहवोहि पदार्थाः कथमेकतां गता इति सामग्र्यपि विलक्षणधीरेवेति तुल्यम् । किञ्च विषयतया बुद्धिविशेषो वा तद्विषयत्वमेव वा यदि समुदायत्वम्, तदा विषयात्मकसमु-दायस्य ताद्रूप्ये तदपि कथमन्यादृग्ज्ञायते । विशेषणविशेष्यभावरूपविषयभेदादिति चेदेवं तर्हि तद्विशिष्टरूपेण समुदायस्यापि भेद एव, अभेदस्याभ्युपगमे च विरोधः, एकतरमिथ्यात्वे चापसिद्धान्त इत्यादिकं तत्र तत्र शारदायां मृग्यमित्याशयेनाग्रे आदिपदम् ।

व्यवस्थापकान्तरोक्तावनवस्थेति । कार्यतत्सामग्र्योः कार्यकारणभावातिरिक्तव्यव-स्थापकमत्र ग्राह्यम्, कार्यकारणभावस्य व्यवस्थापकत्वे तु 'तस्मादन्यदास्थाया' इति मूले वक्ष्यमाणार्थे पर्यवसानम् । यद्यपि कार्यकारणभावेऽपि सम्भवत्यनवस्था, तथापि दूषणतया न प्रक्रियादशायां तदादरः, अपि तु मुख्यसिद्धान्तदशायाम्, अतएव स्वप्रकाशप्रस्तावे घटं सामग्रीपरम्पराविच्छेदरहितं वक्ष्यति, एवञ्चानवस्थयेह प्रत्यवस्थाय पुनरनवस्थापराहतो-पगमो मूलकृतोऽनुचितः सन्दर्भासङ्गतेरिति न शङ्कनीयम् । एवञ्च सामग्र्यव्यवहितोत्तरत्वस्य कार्योत्पत्तेश्च व्याप्यव्यापकभावः कार्यतत्सामग्रीगतेन व्याप्यव्यापकभावेन प्रयुक्ततयाऽऽ-गन्तुको नतु स्वाभाविक इत्यागन्तुकत्वं स्वभावेनाव्यवस्थितत्वपरतया व्याख्यातम्, कार्य-कारणभावरूपप्रयोजकेनाऽऽनीतं चेदिह व्यवस्थितत्वं तदा कार्यकारणभाव एवासमसमयत्व-नियत इहोपास्यतामित्यवेत्य तस्मादित्यादि वक्ष्यति । अन्यदा तिष्ठतीत्यर्थे सुपिस्थ इति कप्रत्यये टाबित्याशयेन व्याचष्टे अन्यदास्थायाः पूर्वक्षणावच्छिन्नाया इति । अन्यस्मि-न्नास्था यस्येति व्युत्पत्त्या 'अन्यस्य दुगाशी' रित्यादिना दुगागमे साधुता तु नादर्तव्या, आस्थाशब्दस्य स्वीकाराद्यर्थकस्यात्राविवक्षितत्वात् ।

मूल पृष्ठम् ३०— तत्प्रसञ्जका इति । सत्ताविरहप्रतिपादका इत्यर्थः । मूलकृद्गाथेति । यद्यपि प्रकृतमूलग्रन्थे श्लोको नायमुपलभ्यते तथापि लघुचन्द्रिकायां खण्डनकारीयत्वेनोद्धृत-तया तामनुसृत्यात्रेत्थमुक्तम्, एवञ्च प्रकृतग्रन्थे एवायं विलुप्तः श्लोको ग्रन्थान्तरे वा प्रकृतमूल-कारीय इति को वेत्ति ।

मूल पृष्ठम् ३१— प्रमात्वमालिङ्गेदिति । घटत्वोपहितव्यक्तिमात्रे हि घटत्वान्वये तस्य घट इत्यनेनैवावगततयाऽऽकाङ्क्षादिविरहेण घटोघट इति बोधो नोपगम्येत घटत्व-विशिष्टे तदन्वये तु घट इत्यनेन तथाऽवगमाभावेनाऽऽकाङ्क्षासत्तया घटो घट इत्यपि स्यादेव, परन्त्वेवं घटत्वस्यापि घटत्वेऽन्वयप्रसङ्गेन भ्रमत्वमेव स्यात, धर्मिणस्तादात्म्येन भाने धर्मस्य भेदसम्बन्धेन समवायादिना भानात् । एतच्च न परं शाब्दसामग्रीदशायामपि तु प्रत्यक्षादिसामग्रीसमवधानस्थलेऽपीत्याशयेन क्वापीत्युक्तम् ।

तादृशनिश्चयविशेषणत्वेनेति । स्मृतिजनकत्वस्य स्वरूपसम्बन्धेन तादृशनिश्चय-विशेषणत्वे सामानाधिकरण्यसम्बन्धेन तादृशनिश्चयत्वेऽपि विशेषणतया विधेयीभूतजनक-

तायां तादृशनिश्चयत्वस्येव स्मृतिजनकत्वस्यापि स्वावच्छिन्नत्वसम्बन्धेनान्वयः, एकजातीय-सम्बन्धेन विशेष्यविशेषणयो विधेयान्वयितायामेव विशेष्यविशेषणभावौचित्यात्। भिन्न-जातीयसम्बन्धेन तूपाधेरपि विधेयान्वयः सम्भवत्येव, एवञ्च तादृशनिश्चयस्याधेयतसम्बन्धेन स्मृतिजनकतायामन्वये तस्याः स्वावच्छिन्नत्वसम्बन्धेनैव स्वस्मिन्नन्वय इति तस्या निश्चय उपाधित्वेऽपि नासंगतिः, उपाधिसाधारणविशेषणतावत एकजातीयेन भिन्नजातीयेन वा विशेष्यान्वयिनाऽन्वयित्वस्यैव निश्चयस्य विशेष्यतापक्षे लाभेऽपि निश्चयत्वस्योक्तरीत्या विशेष्यत्वे उपाधिव्यावृत्तविशेषणताया अपि लाभादिति। एतेनस्वकालेत्यादि। अत्र प्रथमे स्वकालनियतेति द्वितीये च सत्यन्तमुपलक्षणं व्यावर्तयति। व्यवच्छेदकत्वं तु व्यावृत्तिमति-जनकत्वम्।

दुर्ग्रहत्वञ्चेति। विशिष्टबुद्धेरेव व्यावृत्तिधीजनकत्वेन विशेषणे तदभावेनासम्भव-वारणाय प्रकृतविधेयान्वयित्वन्यायेन विशेषणे तदुपगमेऽस्मन्मतप्रवेशः, जनकतावच्छेदक-विषयताश्रयत्वोक्तौ च विशिष्टेऽतिव्याप्तिः, विशेषणगतधर्मावच्छिन्नत्वेन तादृशविषयता-निवेशे च विशेषणगतोऽनुगतस्तादृशधर्मो दुर्निरूपः. दण्डत्वादेरुपलक्षणसाधारण्यात्, प्रकृत-विधेयान्वयित्वघटितात्मना तादृशविषयताश्रयनिवेशे तु सिद्धं नः समीहितमितिभावः।

उपाधित्वादिकमिति। आदिना सम्भवस्थलाभिप्रायेणोपलक्षणत्वं ग्राह्यम्।

व्याकुर्वत इति। अद्वैतसिद्धिचन्द्रिकोक्तव्याख्यानेऽस्मिन्नयमस्वरसः—सत्ताविशिष्टस्य कारणत्वे सत्ताया अपि कारणत्वमित्युक्त्या प्रकृतविधेयान्वयित्वनियमो विशेषणे तावत्स्वीकृत एवेति सत्ताविशिष्टस्य सत्तानाश्रयत्वेनासदेव कारणमित्येव वक्तव्यं न त्वसदपीति। सत्ताया असत्त्वे च तदाश्रयस्य सुतरामसत्त्वमित्येवमपि नाऽपिः प्रयोक्तव्य इति।

त्वन्मत इति। सत्कार्यवादं व्यावर्तयतीदम्।

उपलक्ष्यीभूतव्यक्ते विद्यमानतादशामपास्य नोपलक्षितत्वव्यवहार इति ध्वस्तस्य घटस्य कथमुपलक्षितत्वम्, किञ्च भवन्मते पारमार्थिकसत्तया कदाप्यसंस्पृष्टस्य घटादेस्तदुपल-क्ष्यत्वासम्भवेन नाभीष्टं सिद्ध्येदित्यरुचेराह वस्तुतस्त्विति

गौरवाच्चे त्यनेनैतदपि सूचितम्—घटकतया व्यापकतामपास्य वस्तुतः सत्तायास्त्रिका-लाबाध्यत्वरूपाया व्यापकत्वाभिधानस्य प्रयोजकताबाधितम्, स्वरूपास्तितामात्रेणैव कारणतो-पपत्तेरिति।

व्याचक्षत इति। प्रकरणस्यास्य शून्यवादसाधारण्येन व्याचिख्यासिततयाऽद्वैत-सिद्धिचन्द्रिकायामाचार्यैरुचितोक्तस्याप्यस्य भावस्य नात्रादरः

मूले पादप्रसारिकेति धात्वर्थनिर्देशे ण्वुल्। सत्ताविशेषानन्त्यप्रसक्ताविष्टीकरण-मिति तात्पर्यार्थः। कष्टतरमित्यत्र ते इत्यनुषज्यते। वृद्धिमनिच्छतो मूलनाशे कष्टम्, तामिच्छ-तस्तु तन्नाशे कष्टातिशय इति भावेन तरप्प्रयोगः।

मूले स्वरूपसत्तोपगमाय स्वस्तीत्यत्र स्वरूपसत्तेति प्रथमान्तं वा, उपगमशब्देन षष्ठी-

समस्तं वा, उपगन्तृगतं हितमुपगमे आरोप्य जातिस्वीकारोपपादकत्वरूपं हितमुपगमे विवक्षित्वा वोपगमशब्दे उपपदविभक्तिरात्वेत्याशयेन व्याचष्टे स्वरूपसत्तोपगम इति।

स्वरूपसत्तात्मकत्वोपगम इति। स्वरूपसतः कारणत्वे विशेषणविधया सत्ताया अप्रवेशेन नात्माश्रयादिचोदनेति भावः। कथञ्चिदिति। शब्दमात्रानुगमो नत्वर्थानुगम इत्यभिप्रायेणेत्यर्थः।

मूलपृष्ठम् ३३—जन्यसत्त्वावच्छिन्नं प्रतीति। यद्यपि जन्यसत्त्वं यदि कार्यतावच्छेदकं तदा नित्यसाधारणसत्त्वस्यासिद्धिरेव, प्रमाणान्तराभावात्, तदसिद्धिं विनैव च तद्व्यावृत्तये तार्किकाणां विशेषणोपादानमुपहास्यतां याति, तथापि सत्त्वमात्रस्यैव कार्यतावच्छेदकत्वमस्तु, अतिप्रसक्तस्यापि तथात्वे त्वन्यथाभावादिति पूर्वपक्षाभासः। वस्तुतस्तु द्रव्यत्वावच्छिन्नकारणतानिरूपितकार्यता येन धर्मेणावच्छिद्यते स धर्मो जन्यगत एव प्राक्प्रतीतो न सहसैव नित्याऽऽलिङ्गनस्य प्रभवति, साधकं विना बाधकाभावस्यापातत उपन्यासेन हि किं क्रियेत। द्रव्यत्वादिना जन्यात्मकस्वाश्रयसाजात्येन तत्पादप्रसारिकाया अप्रयोजकत्वपराहतत्वादिति दूषणमेवैतदिति। गुणत्वेन च रूपादिसाजात्यमपि नास्तीति तु चतुर्थे शारदायां द्रष्टव्यम्।

सप्तपदार्थीसाधारणस्येति। न च पदार्थत्वप्रमेयत्वादिकमेव सर्वानुगतं सत्त्वम्; तस्य घटः सन्नित्यादिचाक्षुषप्रतीत्यविषयत्वात्, सर्वत्रोपनयस्याप्यसम्भवात्, अननुगतशक्तिप्रमात्वादिघटिततयाऽनुगमासम्भवाच्च, विषयतात्वादिनाऽनुगमस्य च घटः सन्नित्यादौ स्वरूपतः सत्त्वभानेन निष्फलत्वादिति भावः। इत्यपि कश्चिदिति। अत्रानुगतकारणत्वावच्छिन्नसाधने कार्यतानुगताऽपेक्षितेति द्वयोरनुगमस्य परस्परानुगमायत्तत्वेऽन्योन्याश्रयः। प्रकारान्तरेण कार्यताऽनुगमसमर्थनेऽपि कार्यतावच्छिन्नं प्रति कारणतावच्छिन्नस्य कारणताया इह विवक्षितत्वे कार्यतायाः कारणतायाश्च स्वस्वावच्छिन्नत्वप्रसङ्गेनात्माश्रयोदुर्वारः, कार्यतायां कारणतानिरूपितत्वमात्रस्यात्र तात्पर्यतः सिषाधयिषितत्वे सनिरूपकपदार्थानां तुल्यवित्तिवेद्यतया कार्यतात्वावच्छिन्नविषयकवित्त्यैव कारणताया निरूपकतयाऽवगाहनेन सिद्धसाधनम्, कादाचित्कत्वं च स्ववृत्तित्वस्वेतरावृत्तित्वाभ्यां किञ्चित्कालविशिष्टत्वं नानुगतमिति भागासिद्धिः वाङ्मात्रेण किञ्चित्कालस्यानुगमोपगमेऽपि तद्वृत्तित्वस्यैवाप्रसिद्धयैव हेत्वप्रसिद्धिरिति दोषजातं भूषामणिव्याख्यानेऽत्रास्वरसबीजम्।

इति वदन्तीति। कारणतानुगमस्यौचित्यमनुमत्य तदननुगमोपगमे नादर इत्यस्वरसोऽत्राद्वैतसिद्धिकारीयमते। वस्तुतस्तु नाननुगम इवानुगमोऽपि सङ्गत इति चतुर्थे शारदायां द्रष्टव्यम्

मूलपृष्ठम् ३४—एकत्वविशिष्टस्यैवाधारत्वादिति। घटप्रतियोगिकत्वस्योपाधित्वविशेषणत्वाभ्यामाधाराधेयतावच्छेदकत्वोपगमस्याप्युपलक्षणमिदम्। तेन घटाभावे घटाभावोऽस्तीत्यादिसाधारण्यमपि।

निषेधप्रतियोगित्वस्येति। परमार्थवृत्तित्वं निषेधे विवक्षणीयम्, तेन जडानुयोगि-

कभेदप्रतियोगित्वेऽपि ब्रह्मणो न क्षतिः। परमार्थसद्वृत्तिस्वरूपसम्बन्धेन वा वर्तमानस्य निषेधप्रतियोगित्वस्य परिच्छेदवत्त्वव्यवहारप्रयोजकत्वम्। निरूपितं चैतद्वाग्भङ्गीभेदेनाद्यपद्यप्रमेयोपपादने पुरा।

**किन्न स्यादनुभवसाम्यादिति।** अस्माभिरपि निषेधमवगाहमानायां प्रतीतौ प्रतियोगितया घटादेरेवावगाहनस्यादर्तव्यत्वात्, अन्यथा घटादावसत्त्वासिद्धेरिति भावः।

**विरोधिभावान्तरेति।** अत्र विरोधित्वं प्रतियोगिनिरूपितम्। भेदस्थले च तादात्म्येन विरोधित्वमक्षतम्। अत्यन्ताभावस्थले चाभावाधिकरणरूपस्य भावान्तरपदार्थस्य प्रतियोगिविरोधित्वं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वे पर्यवस्यति। प्रतियोगिरूपतालाभार्थं तु विरोधित्वमभावनिरूपितमपि विवक्षणीयम्। अभावस्य प्रतियोग्यनुयोगिभ्यां भेदाभेदयोर्भाट्टादिसम्मतत्वात्। अन्तरपदं तु स्वरूपोत्कीर्तनमात्रपरम्। नच तथापि वैयर्थ्यम्; विरोधिरूपत्वमते भावान्तररूपत्वमते चेत्यर्थसम्भवात्। अत्र च क्रमेण प्रतियोगिरूपत्वमधिकरणरूपत्वं च लभ्यते, प्रतियोगिराहित्यलाभार्थं चान्तरपदम्। न चाभावस्य प्रतियोग्यात्मकत्वे विरोध एव कथमिति शङ्क्यम्। अभावत्वेन घटत्वादिना च विरोधात्।

**असद्भिन्नभेदाभिन्नघटादीति।** अत्राधिकं 'अभेदं नोल्लिखन्ती'तिकारिकाशारदायां परतो व्यक्तम्। ननु भवतु भेदस्यानुयोग्यभिन्नत्वम्, नात्राग्रहः, तत्त्वेन प्रतीतिं पुनर्न मृष्यामहे, प्रतियोग्यभिन्नत्वेन तु सुतराम्, असत्प्रतियोगिकभेदानुयोगित्वेनैवोक्तधिया घटादिसमर्पणादिति चेन्न; प्रतियोग्यनुयोगिभावादेस्तावत्स्वरूपसम्बन्धरूपताऽऽवश्यिकी, अखण्डोपाधितावादस्य भेदभङ्गशारदादौ निरस्तत्वात्, स्वरूपसम्बन्धश्चाभेद एव पर्यवस्यतीति तत्रैवोपपादितं 'सम्बन्ध्यन्तरस्य तत्स्वभावप्रवेशा'दिति पङ्क्तिमधिकृत्य, एवं च मोद्गा[1]त्सार्वजनीना मतिरसद्भिन्नभेदाभिन्नघटादिकमवगाहमाना, युक्तिप्रतिसन्धानाधीना तु धीरवगाहेतैव तमिति तावतैवाभीष्टाभ्युपपत्तिः।

**मूलपृष्ठम् ३५—असतोऽपि कारणत्वसम्भवेनेति।** अत्रापिना मिथ्यात्वविरुद्धसत्यत्ववतो न समुच्चयः, सिद्धान्ते मिथ्याभूतस्यैव कारणत्वात्, किन्तु परमतसिद्धसत्तयोपलक्षितस्य, स एव चेह प्रतिबन्दिमाश्रित्यासत्तोपलक्षिततयोच्यमानोऽपि वस्तुतो मिथ्यैवेति।

**मूल पृष्ठम् ३६—पर्यवसानं वेति।** विकल्प्यमानार्थसमर्पकपदोत्तरं वाकारप्रयोगौचित्यं मत्वा विपर्यास आदृतः, अन्यथा सत्तात्यागे इति सप्तम्यन्तपाठोऽनुरोद्धव्यः स्यात्, तादृशपदयोर्हि समानविभक्तिकत्वमपेक्षितमिति भावः। **अप्रत्यक्षतापत्तिरिति।** तयोरिति सम्बध्यते। **सत्ताविशिष्टनिष्ठत्व इति।** अन्वयस्येति भावप्रधानमिति भावः।

**मूल पृष्ठम् ३७ रसः स्वादः सारश्चेति।*** किट्टाख्यासारभागभिन्नो मुक्ताहारस्य

[1] उदिता माऽस्तु

* टीकायां 'रसः स्वाद' इत्यत्र 'रसः स्वादः सारश्चेति पाठो द्रष्टव्यः।

साराख्यो भागो लोहित्वादिहेतुः प्रसिद्धश्चरकादौ। माधुर्याद्यनुभवात्मकास्वादस्तत्प्रयुक्तानन्दश्च मोदकजीर्णीकारस्य यद्यपि न फलम्, तथापि रसनेन्द्रियसम्प्रयोगद्वारैव सम्भवता जीर्णीकारेण तादृशसम्प्रयोगोऽप्याक्षिप्यत एवेति रसशब्देन स्वादोक्तिरपि नासङ्गता।

**क्यङर्थसादृश्येति।** आशामोदककर्तृकाचारतुल्याचारस्य क्यङन्तलभ्यतया सादृश्यस्य तद्घटकतया क्यङर्थत्वम्। 'कण्ठकूपे क्षुत्पिपासानिवृत्तिः' 'बलेषु हस्तिबलादीनि' (योगदर्शने) 'अमृतत्वं विषं याति सदैवामृतवेदनात्। शत्रुर्मित्रत्व मायाति मित्रसंवित्तिवेदनात्। (योगवासिष्ठे—उत्पत्ति० सर्ग ६०) इत्यादिपारमर्षपरामर्शान् निदर्शनतां गमयन्नाह **मानसशक्तिविशेषशालिन इति।**

**आहुरिति** अत्रमतेऽस्वरसबीजं त्वनुपदं चन्द्रिकाकारमतोपन्यासे व्यक्तम्। **विशेषणताया अभ्यर्हितत्वेनेति।** प्रकृतविधेयान्वयित्वनिबन्धनमभ्यर्हितत्वम्।

मूलपृष्ठम् २८—**प्रातीतिकविषयकत्वेनेति।** अविद्यावृत्तेस्तावत्स्वरूपत एव प्रातीतिकत्वम्, नितरां तु प्रातीतिकविषयकत्वेन, चिद्रूपज्ञानस्यापि तु तथात्वेन प्रातीतिकत्वमेवेति भावः।

**प्रातीतिकस्याभावादिति।** व्यावहारिकरजतत्वप्रकारकेच्छाधीनप्रवृत्त्युपपत्तये तज्ज्ञानस्य प्रातिभासिके ऽवश्योपेयत्वे प्रातीतिकमात्रवृत्तिरजतत्वकल्पने मानाभावः। अधिकं तु प्रागुक्तमेव।

**इत्याहुरिति।** एवं चात्र मते आशामोदकस्थलेऽपि मोदकत्वप्रकारकचिद्रूपज्ञानेनैवाभीष्टसिद्धेर्न प्रकृतमूलासङ्गतिरिति। प्राहुरिति तु नोक्तम्, तत्तद्रजतसर्पादिनिष्ठविशेष्यतायाः कारणतावच्छेदकानन्तर्भावे विजातीयसुखभयकम्पादिकं नोपपद्येत, नहि विजातीयपरिमाणादिविशिष्टरजतसर्पादिदर्शनैरेकजातीयमेव सुखभयादिकं जन्यते, उक्तविशेष्यतायाः कारणतावच्छेदकान्तर्भावे तु न चिद्रूपज्ञानस्यापि तेन रूपेण व्यावहारिकत्वं नियन्तुं शक्यत इत्यस्वरससद्भावात्। एवं च यथानुभवं विशिष्यैव कार्यकारणभावोऽभ्युपगन्तुमुचित इति तत्त्वम्।

**अध्वस्तत्तद्गुणयोगस्येति।** स्वाधारसमयध्वंसानाधारः स्वाधारश्च यः समयस्तद्योग इति फलतो लब्धव्यम्

**कारणताव्यापकस्य स्वरूपसत्त्वस्येति।** कालसम्बन्धितारूपतया प्रागभिहितस्य।

**प्रतियोगिविरोध्यत्यन्ताभावस्येति।** ईदृशाभावघटितव्यापकता दण्डादौ प्रतियोग्यन्यूनसत्ताकात्यन्ताभावघटितमिथ्यात्वपक्षेऽपि सम्भवति, परन्तु व्यावहारिकाभावस्यापि मिथ्यात्वार्थं व्यावहारिकाभावान्तरोपगमेऽनन्ताभावस्वीकारप्रसङ्गेन प्रथमस्यैव ब्रह्मरूपतया तात्त्विकत्वमुररीकार्यमित्याशयेन प्रतियोग्यधिकसत्ताकात्यन्ताभावघटितमिथ्यात्वादरं दर्शयितुं व्यापकता गर्भे प्रतियोगिसमसत्ताकाभावनिवेशः। यद्यप्येवमपि प्रतियोगिविरोध्यत्यन्ताभावघटितव्यापकतैवादरणीया, उभयविधमिथ्यात्वपक्षे दण्डादौ सङ्गमात्, लाघवाच्च, न च प्रतियोगिविरोधित्वस्य प्रतियोग्यसामानाधिकरण्यात्मनः प्रतियो-

गिसमसत्ताकत्वं व्यवहारकालाबाध्यत्वादिघटितमूर्तिकमपेक्ष्य लघुत्वं भवतु, प्रतियोगि-सत्तापहारकत्वापरपर्यायप्रतियोगिविशेष्यकसत्यत्वप्रकारकमतिप्रतिबन्धकतावच्छेदकविषयिता-निरूपकतावच्छेदकधर्मवत्त्वात्मनस्तु तदपेक्ष्य गुरुत्वमेव दण्डादौ व्यापकत्वानिर्वाहकत्वं च, मिथ्यात्वघटकीभूताभावस्योक्तविरोधित्वाक्रान्तस्य प्रतियोगित्वादेव दण्डादेरिति वाच्यम् अग्रे स्वयं प्रतियोग्यसामानाधिकरण्यात्मन एव प्रतियोगिविरोधित्वस्याभिहितत्वात्, तथापि प्रतियोगिसमसत्ताकात्यन्ताभावस्य वाऽप्रतियोगित्वमित्यत्र वाकारस्यानास्थायां व्याख्याने न कश्चिद्दोष इति ।

मूलपृष्ठम् ३९—ब्रह्मगतसत्त्वं चेति । त्रिकालाबाध्यत्वस्य कालानवच्छिन्नबाधक-ज्ञानाविषयत्वरूपतायां कालत्वव्यापकबाधकज्ञानाविषयत्वरूपतायां वा दण्डादौ दुर्ग्रहत्वं स्पष्टमेवेति प्रागुक्तम्, यथाश्रुते त्वाह त्रैकाल्यघटितत्वादिति । बाधस्य प्रमात्वघटिततया न सर्वत्रासुलभमुपनयमनुपास्य प्रत्यक्षता सम्भाव्येत्यपि द्रष्टव्यम् ।

न तत्सेद्धुमलमिति । विरुद्धस्वभावयोरभेदरूपतादात्म्यस्यासम्भवेनाध्यासिक-मेव तत्सम्भवन्न प्रपञ्चे पारमार्थिकत्वसमानासनासीनतामास्वादयितुमलमिति भावः ।

तात्पर्यादिति । विशिष्य व्यवहारकालाबाध्यत्वसमानाधिकरणकपालत्वादेर्योग्य-तावच्छेदकत्वेऽपि सामान्यतो व्यवहारकालाबाध्यत्वस्यैव तथात्वमुचितमुक्तम्, कारणतौप-यिकत्वं तु कारणताव्यवहारमुपधायकत्वं च प्रति प्रयोजकत्वम् । एवं च तादृशबुद्धिमुख्य-विशेष्यत्वमेव कारणत्वमितिपक्षस्त्यक्तः, अतएव 'तादृश्यैव विषयीकृतस्ये' त्यादिमूलेन तयो-र्भेदो ध्वनितः। अग्रे टीकायां 'तादृशमुख्यविशेष्यतायाः कारणतारूपायाः' इत्युक्तिस्तु शङ्कितुर-भिमानेनेतिभावः ।

जातिरूपत्वादिति । धर्मिण्यनागन्तुकानुगताखण्डधर्ममात्रस्य जातिपदव्यवहार्य-तोचिता तार्किकसरणिमनादृत्यैवेति तत्त्वम् । प्रकर्षघटिततया प्रमात्वस्याखण्डतायामनुभव-विरोधो यदि कस्यचित्स्यात्तदा सद्विषयकज्ञानत्वं प्रमात्वमिति प्रमात्वखण्डनशेषे शारदाया-मुपपादितः पक्षः पुरस्कर्तव्यः ।

व्यावहारिकप्रमात्वमिति । सुखादिप्रत्यक्षेऽव्याप्तिस्तु न चोदनीया, अज्ञाननिव-र्तकबोधे एव प्रमात्वव्यवहारेण तत्राप्रमात्वस्येष्टत्वात् । अखण्डसत्ताश्रयविषयकज्ञानत्व-रूपं प्रमात्वं तु वक्ष्यमाणं तत्साधारणमेव । प्रकृतलक्षणे सुखाद्यविषयकज्ञातसत्ताकविषयक-धीभिन्नत्वनिवेशेन तु न निर्वाहसम्भावना, तस्य पुरुषान्तरे सुखादिभ्रमेऽतिव्याप्तिप्रस्तत्वात् ।

युक्तमिति शेष इति । अन्यथा मूले 'न तावता सत्त्वं वयं मन्यामहे' इति 'न तावता सत्त्वं वयमवधारयाम'. इति वा वक्तव्यं स्यात् । अत्र वयमिति शब्दो विचारकौशलरूप-विशेषवति सङ्क्रान्त इति तद्व्यर्थता नाशङ्कनीया ।

मूलपृष्ठम् ४०—उत्तरकालिकसत्त्वप्रकारकबुद्धीति । सत्त्वमस्तित्वसाधारणमिह प्र-विष्टमित्याशयेनोत्तरत्वपूर्वत्वे विवक्षिते, इदानीन्तनास्तित्वप्रत्यक्षप्राक्क्षणेऽस्तित्वाभावे सन्नि-कर्षाभावेन घटादौ प्रत्यक्षविषयत्वस्याप्यभावापत्तेः । मिथ्यात्वविरुद्धसत्त्वविवक्षणे तूत्तरत्व-

पूर्वंत्वयोः परस्परोपलक्षणत्वमपि द्रष्टव्यम्। उत्तरकालिकेति शब्दसिद्धिप्रकारस्त्वनुपलब्धि-खण्डनशारदाराजहंसे द्रष्टव्यः।

तादृशज्ञानाभावकालिकेत्यर्थ इति। एवं च योग्यतानिवेशादर उभाभ्यामपि कार्यो बुद्धिविरहकालीनसत्त्वकारणत्वसाधारण्यायेतिभावः। कालसम्बन्धित्वस्येह संवृतिसत्त्वरूपत्वे मूले प्रस्तुतस्य बुद्धिविशेषविषयत्वस्य सर्वथा तिरस्क्रिया स्यादित्यस्वरसादाह वस्तुतस्त्विति।

मूलपृष्ठम् ४१—भवत्परेषामिति। स्याद्वादसञ्ज्ञयां जिनं प्रस्तुत्येदम्, तथा च जिनभिन्नानामित्यर्थः। वेदान्तिनामिति तात्पर्यम्।

नन्विदमर्थरजतयोस्तादात्म्यमिह प्रथते, तच्च नातिरिक्तम्, तथा च तद्द्वयमात्रभानं नापराध्यति, तत्राह सम्बन्धस्य सम्बन्धिभिन्नत्वेत्यादि। अप्रामाणिकमिति। अन्यथा तटस्थयोरपि विशिष्टबुद्धिविषयतापत्तेः, सम्बन्धस्य सम्बन्धिभिन्नत्वे च तदीयसम्बन्धस्यापि प्रतियोग्यनुयोगिभावात्मनो भाने तस्य सत्त्वे प्रमात्वस्यासत्त्वे त्वसत्ख्यातेरापत्तेः, एतच्च विततय परतो 'न तु रजतत्वमात्रेऽप्रामाण्य'मिति प्रत्यक्षखण्डनरङ्क्तिशारदायां सामान्यनिरुक्तिनिरासशारदायां च वाच्यमिति नेहायस्तम्।

सिद्धमिव कृत्वेति। मूले भ्रमविषयेणैवेतिदृष्टान्तेनासतोऽपि साधकता सम्भाविता, नत्वसत एवेति निर्धारिता, अन्तर्भावितसत्त्वं चेदित्यादिदिशापि सत्ताविशिष्टस्य कारणत्वपक्षेऽसत्त्वं नतूपाधिपक्षे, तथा च साधकतया निश्चितेऽपि ज्ञाने नासत्त्वनिश्चयसम्भव इत्याशयेनात्रेवकारप्रयोगः। टीकोक्तप्रकारेण तु कारणीभूतज्ञानेऽसत्त्वं निश्चितमेव, पारमार्थिके कारणताया निरस्तत्वात्।

मूलपृष्ठम् ४२—तथाचासत एव जनकत्वमिति। ननु शब्दच्छलमेतत्, मिथ्यात्वं यद्यसत्त्वं तदा तदाश्रयविशेषितरूपेण ज्ञानस्यापि तदाश्रयत्वं स्यात्, तस्य स्वरूपसत्त्वाविरुद्धत्वात्, मिथ्यासंसृष्टताया अपि मिथ्यात्वप्रयोजकत्वसम्भवाच्च. परमते तु भविष्यदादिविषये ध्वंसप्रागभावकालावृत्तित्वमसत्त्वम्, तत्कथं ज्ञानेऽपि तदाश्रयविशेषितरूपेण विश्वसनीयं स्यात्, सुतरां तु व्यावृत्तिधीरूपकार्यप्राक्कालावच्छेदेन, तथा च कथमिदानीमसतो जनकत्वम्, कादाचित्कासत्त्वं च स्वरूपतोऽप्यस्त्येव ज्ञाने इति विषयविशेषविशेषितरूपेण तत्प्रार्थनमनर्थकम्, न चेहोपयुक्तमपि तत्, व्यावृत्तिग्रहरूपप्रयोजनोपयुक्तकाले ज्ञानस्य सद्भावादित्यरुचेमूं लग्रन्थं परित्यजन्निवाह—

किञ्च प्रतियोगितेत्यादि। प्रमाणबलात्सिद्धमिथ्यात्वेऽपि कारणतेति। कारणताग्रहो हि नेदानीं मिथ्यात्वबोधं प्रतिबन्द्धुमीष्टे, पारमार्थिके कारणतायाः सर्वथैव तिरस्कृतत्वेन परिशेषान्मिथ्याभूत एव तस्या वक्तव्यत्वादितिभावः।

मूलपृष्ठम् ४३—स्वाप्नज्ञानं मिथ्येत्यनुभवबलादिति। न चायमनुभवो बाध्यविषयकत्वं ज्ञानेऽवगाहते न तु तस्यापि मिथ्यात्वम्, तथासति तस्य सत्यत्वे बाध्यविषयेण सम्बन्धानुपपत्तेः। सम्बन्धस्य मिथ्यात्वे च प्राचीनसरणेरनुसरणे तत्संसृष्टतया ज्ञानस्यापि मिथ्यात्वं

प्रसज्यतएवेति नानुभवान्यथानयनमनुमन्यामहे। तदननुसरणे तु मूर्तप्रतिभासात्मकतापक्षः पुरेरितोऽत्रानुसन्धेयः। तत्रापि तत्साक्षिण एव जनकत्वाऽऽग्रहे तु जाग्रत्यपि मूर्तकामिन्यादेः कचिज्जनकता न स्यात्। विषयस्य स्वप्नादावविद्यमानत्वाभिमानेन हि तत्रत्यकार्यविशेषो ज्ञानमात्रशरणः कल्प्यते, तस्य तत्रोक्तरीत्या विद्यमानत्वाऽऽनयने तु नेदृक्कल्पना कमनीया। लघुचन्द्रिकाकृतां मते तु व्यावहारिकस्यैव कारणतेति प्रागुदीरितमेव।

इति खण्डनशारदायां शून्यतोत्सर्गेऽसतः कारणत्वे च राजहंसः।

## खण्डनशारदायां स्वप्रकाशवादे राजहंसः

मूलपृष्ठम् ४३ ज्ञानानात्मकतया शून्यतायाः स्वतः सिद्धत्वपक्षापक्षयं स्वतः सिद्धमालोच्याह **तस्मात्स्वतःसिद्ध इति।**

**उपेयते चेति** 'केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः' 'मन्यन्ते बत मध्यमाः कृतधियः स्वस्थां परां संविद' मित्यादौ स्वस्थत्वं स्वविषयत्वमेव विवक्षितम्, सर्वोपप्लवशून्यत्वरूपस्वास्थ्यस्य संसारेऽसम्भवात्, निर्विकल्पसमाधावपि वासनात्मना रागाद्युपप्लवसत्त्वात्, तत्कालीनसंविद्दशाया योगाचारादिसाधारण्येन माध्यमिकमते विशिष्य तदुपन्यासानौचित्याच्च, मुक्तौ तु 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः' इत्यादितदीयनिबन्धोक्त्या संविदभाव एव शून्यवादे इति क स्वस्थताऽन्यादृशी। एवं सति कर्तृकर्मविरोधेनैकत्र विषयविषयिभावस्य निराकरणं माध्यमिकवृत्तौ तस्य सांवृतत्वमात्रतात्पर्यकम्। एवमेव बोधिचर्यावतारपञ्जिकायाम्—

'उक्तं च लोकनाथेन चित्तं चित्तं न पश्यति।
न छिनत्ति यथात्मानमसिधारा तथा मनः॥
आत्मभानं यथा दीपः सम्प्रकाशयतीतिचेत्।
नैव प्रकाश्यते दीपो यस्मान्न तमसा वृतः॥
नहि स्फटिकवन्नीलं नीलत्वेऽन्यमपेक्षते।
तथा किञ्चित्परापेक्षमनपेक्षं च दृश्यते।।'

इत्युक्तस्यापि गतिर्द्रष्टव्या, यद्येवं नानुमन्यते तदोक्तस्वस्थताप्रतिपादकवचसामप्रामाण्यमेव वक्तव्यं स्यात्, एतदपेक्षया तु माध्यमिकानां प्रस्थानभेदाभ्युपगमः परमुचितः प्रतीयते, परन्त्वेवं स्वविषयत्वोपगन्तृप्रस्थानस्यैव युक्तता मन्तव्या, अन्यथा घटस्येव तज्ज्ञानस्य स्मरणं न स्यात्, अननुभूतत्वात्, ज्ञानविषयकज्ञानान्तरोपगमस्यानवस्थापास्तत्वात्। न च घटस्मरणे तत्सम्बन्धात्तदनुभवस्यापि स्मरणसम्भवः, 'यदि नास्ति स्वसंवित्तिर्विज्ञानं स्मर्यते कथम्। अन्यानुभूते सम्बन्धात्स्मृति'रिति बोधिचर्यावतारपञ्जिकोक्तेः, अन्यानुभूते इत्यस्यान्यस्मिन् विषयेऽनुभूतेइत्यर्थ इति वाच्यम्, ज्ञानस्य संस्कारं विना विषयसम्बन्धमात्रेण स्मरणोक्तेरतितुच्छत्वात्। एतेन प्रागुक्तवचोद्वये योगाचारसम्मताकाररहित्यमेव स्वास्थ्यं विवक्षणीयमित्यपि नाशङ्कनीयम्, तत्र केवलामिति विशेषणवैयर्थ्यप्रसङ्गाच्च। अधिकं तु दर्शनसर्वस्वेऽद्रष्टव्यम्।

हेतोरेवासम्बन्धादिति। न चानिर्वाच्यत्वस्याभावात्मकतयाऽधिकरणस्वरूपत्वेनासङ्गेऽपि ब्रह्मणि सम्बन्धः, अभावभूतधर्माणां तन्नोपगमात्, सम्बन्धितावच्छेदकं ह्यभावत्वं ब्रह्मण्येवेतिवाच्यम्, हेतुतावच्छेदकसम्बन्धो हि स्वरूपं वाऽभेदोवा, आद्येऽभेदसम्बन्धेन ब्रह्मणि हेतुसद्भावेऽपि न क्षतिः। द्वितीये त्वभावत्वेन रूपेण ब्रह्मणि हेतोः सत्त्वेन तेन रूपेण बाध्यतासद्भावोऽपि तत्रेति क व्यभिचारः। न च स्वरूपसम्बन्धेनापि हेत्वधिकरणतावच्छेदकावच्छिन्ने ब्रह्मणि न मिथ्यात्वमिति प्रथमेऽपि क स इति।

मूलपृष्ठम् ४४—प्रतियोगिनि दृष्टे चेति। प्रतियोगित्वं विरोधित्वम्, दृष्टत्वं तूत्पन्नत्वं वा प्रमात्वस्वतस्त्वस्वीकारप्रयुक्तं निश्चितप्रमात्वकत्वं वा, प्रमात्वपरतस्त्वपक्षेऽप्यगृहीताप्रामाण्यकस्य प्रतिबन्धकत्वे निश्चितप्रामाण्यकस्य तरुतराम्, न च जाग्रद्बोधे संवादिप्रवृत्त्यादिना न तन्निश्चितमिति भावः।

तव भेदोऽपीति। सर्वस्य ज्ञानाकारत्वं सांवृतत्वं वोपगन्तुर्नये जाग्रत्स्वप्नबोधयोर्वैषम्यमित्यर्थः। एतच्च व्यावहारिकसत्तोपगमपक्षे। यदि तु प्रसिद्धदृष्टिसृष्टिवादानुसारेण शुक्तिरजतादेः समसत्ताकत्वमिष्टमेव, स्वाप्नबोधस्य स्वाप्नबोधान्तरबाधकत्ववज्जाग्रद्बोधस्यापि जाग्रद्बोधान्तरबाधकत्वसम्भवः, अनादिवासनावशंवदतया तु शुक्त्यादावधिकसत्ताकत्वाभिमानोऽविचारचतुराणामित्युच्यते, तदापि चरमबाधस्य निरुक्तसावधिकत्वमावश्यकम्, अन्यथा प्राचीनबोधानामिव तस्यापि बाध्यमात्रविषयकत्वेऽविश्वसनीयतया प्रेक्षावच्चित्तविश्रान्तिधामत्वानुपपत्तेः, अधिकं तु दर्शनसर्वस्वे वर्णितम्। अत्रैव प्रागुक्तदृष्टिसृष्टिवादादरे तु न काचिच्चिन्तापीति सर्वं चतुरस्रम्।

अत्र यद्यपि 'तेने'त्यादिग्रन्थस्य निगमनकार्यकारिताभानेन 'विज्ञानं तावत्स्वप्रकाश'मिति प्रतिज्ञावाक्यम्, 'न खलु विज्ञाने' इति तु हेतुं पक्षेऽर्पयदुपनयस्थानीयम्, स्वातन्त्र्येण हेतुप्रयोगस्तु कुत इति जिज्ञासाया उक्तवाक्येनैव शमनान्नातिप्रयोजनक इति नादृतः, निगमनस्थानीयोक्तवाक्ये एव 'स्वव्यापक' मित्युक्त्या व्याप्तिप्रदर्शनेन चोदाहरणवाक्यमपि नेह न चरितार्थमिति ग्रन्थस्वरसः प्रतीयते, तथापि वेदान्तिसम्मतसाक्षिणोऽव्याप्यसिद्धतयाऽनेनानुमानेनैव वक्तव्यरीत्या तस्य सिषाधयिषिततया न प्रथममेव विशिष्य तस्य पक्षतासम्भवः, घटादिज्ञाने एव योगाचाररीत्या स्वप्रकाशत्वसाधने तु वेदान्तमतासमर्पणेन महती न्यूनतेत्यालोच्य प्रतिज्ञारूपतया भासमानं वाक्यं लक्षणप्रदर्शनपरतया योजयति—

स्वप्रकाशत्वं निर्वक्तीति। अत्र हि घटादिज्ञाने इव तत्साक्षिण्यपि सिद्धवत्कृते स्वप्रकाशत्वं लक्षणीभवितुमलम्। एवं चात्र विज्ञानमितिपदेन विज्ञानपदजन्यधीविशेष्यतया साधारणोऽर्थो विवक्षितः। न चैतेन रूपेण साक्षिणोऽपि मानान्तरसिद्धस्य पक्षताप्यस्तु, तद्गतस्वप्रकाशताया अन्यत्राप्रसिद्धतया प्रकृतेनान्वयिनाऽनुमानेन साक्षात्साधनासम्भवात्, कुटिलिकया तु यथा सिद्ध्यति घटादिज्ञानपक्षकेणानेनैवानुमानेन तथाग्रे शारदायामुदितम्। यथाश्रुतग्रन्थेन हि प्रमितत्वं साध्यते, न च साक्षिणि तत्स्वप्रकाशत्वं, स्वात्मकप्रमाविषयतायास्तत्रानङ्गीकारात्, अन्यप्रमाविषयत्वस्य च स्वप्रकाशतापदार्थत्वविरहादिति निगूढाभिप्रायः।

चित्यसम्भवेऽपि न क्षतिरिति। निश्चयविषयत्वस्य स्वोपहितचिति सत्त्वे उपाधे-

भीस्यकोटावप्रवेशेनोपाधिकालीनमेव ज्ञानस्य शुद्धाकारत्वम्, अत्र च वृत्तिविषयतोपगन्तॄणा- मव्यविवाद एव, अत एवाग्रे आनन्दत्वाद्यवच्छिन्नविषयतानां ज्ञानाज्ञानान्यतरोपाधिकालीन- त्वादित्युक्त्याऽयमेवार्थो ध्वनित इति तत्त्वम्।

नह्यजानन्निति। एतेन जानन् न जानामीति जानामि न वेति न प्रत्येतीति त्वर्थः क्षिप्तम्। अनुभवसाक्षिकं चैतत्।

व्यवहारमात्रेऽपेक्षणीयत्वेऽपीति। व्यवहार इहान्तःकरणप्रयुक्तो द्रष्टव्यः, तेन घटं न जानामीत्यादिसाक्षिरूपव्यवहारस्याज्ञानासत्त्वाप्रयुक्तत्वेऽपि न क्षतिः, अत्र हि प्रमयाऽसंपृष्टस्यापि घटस्याज्ञानावच्छेदकतयैव साक्षिविषयता।

जातिविशेष इति। द्रव्यादित्रिकवृत्तिर्जातिरिति तार्किकसमयमनादृत्येदम्, अभा- वादावपि जडत्वप्रत्ययात्, तथाचानुगताखण्डधर्म इत्यर्थः। अनागन्तुकैदेशधर्ममात्रे जाति- पदव्यवहार्यता हि स्वरससिद्धा। सखण्डत्वाभिप्रायेणाऽऽह—

उपाधिर्वेति। अत्राश्रयत्वतादात्म्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाव- वत्त्वं जडत्वम्, अन्यतरत्वेन च सम्बन्धता न तु प्रत्येकरूपेण, अन्यथा ज्ञाने तदाश्रये च चालनीन्यायेन ज्ञानाभावमादाय जडत्वं स्यादिति न विवक्षणीयम्, तथा सति स्वप्रकाश- ताया ज्ञानात्मकतायां ज्ञानाश्रयत्वे वा पर्यवसानेनार्थान्तरप्रसङ्गात्, अपि तु परप्रकाश्यत्वं जडत्वम्, एवं च स्वप्रकाशत्वं प्रकाश्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वातिरिक्ताभाव- वत्त्वं पर्यवस्यति, तेन स्वातिरिक्तप्रकाश्यान्यत्वकूटस्यासर्वज्ञाज्ञेयत्वेन पूर्वकल्पाविशेषो न देशनीयः। परमतसिद्धे ज्ञाने तदाश्रये च परप्रकाश्ये जडत्वव्यवहारस्त्विष्ट एव।

मानं वक्ष्यतीति। व्याप्तिविशिष्टतया लिङ्गप्रदर्शनमनुमापयतीत्यर्थकमानयतीत्यभि- धानं च 'तेने' त्यादिनैव हि कृतमिति भावः। साक्षिणोऽप्यप्यसिद्धत्वात् तस्य सार्वदि- कत्वेन 'विज्ञाने सती' त्यस्यासङ्गतेश्च व्याचष्टे—

विज्ञाने घटादिज्ञाने इति। निष्प्रयोजन इति। आपादककोटौ जिज्ञासितत्वनिवेशे नैव व्यभिचाराप्रसक्तेरिति भावः।

मूलपृष्ठम् ४५—लाघवसहकृतस्य जीवित्वसाधकत्वमिति। अभावरूपमरणापेक्षया भावरूपजीवित्वस्य शरीरे लाघवम्, किञ्च मरणसाधने 'शतवर्षजीवीदेवदत्त' इति 'शतवर्ष- जीवी गृहेएवेति' निश्चयद्वयस्य बाधनीयतया गृहस्थितिनियममात्रबाधेन निर्वहति जीवित्वसाधने लाघवमविकलं विलोक्यते।

मूलपृष्ठम् ४६—एकस्य कर्मणः कर्मान्तरप्रतिबध्यताया अप्रामाणिकत्वादिति। एककर्मसद्भावे कर्मान्तरानुत्पादेऽपि कर्मान्तरोत्पत्तयेपूर्वक्षणे पूर्वकर्मनाशो नापेक्ष्यत इत्यर्थः।

अत्रेदमाकूतम्—पूर्वक्रिया, ततो विभागः, ततःपूर्वसंयोगनाशः, तत उत्तरदेशसंयोग ततः क्रियानाश इति प्रक्रिया न रमणीया, अप्रसक्तसंयोगस्थले विभागस्य संयोगनाशरूपताया वक्तुमशक्यत्वेऽपि प्रसक्तसंयोगस्थले तस्य तद्रूपतैव, कथञ्चिद्धठात्तयोस्तत्र भेदोपगमे पक्षेऽपि पूर्वापरीभावस्तयोः सर्वथैवानुभवेनासंपृष्टः शतशोऽपि प्रोच्यमानो न श्रद्धेयः, वस्तु

तस्त्वप्रसक्तसंयोगयोरपि विभक्तत्वप्रत्ययो विभिन्नदेशस्थत्वनिबन्धनो नतु गुणान्तरनिबन्धनः। एवं च विभागनाश एव संयोगोऽस्त्विति न देशनीयम्, देशविशेष एवोत्पन्ननष्टमात्रयुक्तादेरङ्कुरादेश्च विभागाप्रसिद्धिदशायामपि संयुक्तत्वप्रत्ययाच्च,एवं च पूर्वं मनसि क्रिया ततःसंयोगनाशरूपो विभागः, तदनन्तरमुत्तरदेशसंयोगपूर्वकर्मनाशकर्मान्तराणामुत्पत्तिस्ततो व्यवसायः पूर्वसंयोगनाशरूपो विभागश्च,पश्चादुत्तरदेशसंयोगः,तदनन्तरं संशयादिरितिरीत्या तृतीयक्षणे व्यवसायविषयकसंशयादेःसम्भवः, एवमनुव्यवसायस्यापि, अत्र कल्पे टीकायामव्यवहितोत्तरत्वं तृतीयक्षणसाधारणम्। यदि त्वात्मनो विभुत्वेन मनसस्तेनासंयुक्तत्वं न कदापि मन्यते, पूर्वसंयोगनाशक्षणे एवोत्तरसंयोगस्यात्ममनसोरुत्पत्तेःसम्भवात्,तदा मनसि क्रियाद्वितीयक्षण एव तन्नाशपूर्वसंयोगनाशात्मकविभागोत्तरप्रदेशसंयोगक्रियान्तराणामुत्पत्त्या व्यवसायद्वितीयक्षण एव तद्विषयज्ञानान्तरसम्भवः। भवतु वैकस्यैव संयोगस्य व्यवसायतद्विषयकज्ञानयोर्जनकत्वम्, कार्यभेदेन व्यपारभेदनियमे मानाभावात्, सहकारिविलम्बेनैकस्यैव क्रमेण नानाकार्यकारित्वोपपत्तेः,प्राग्व्यवसायरूपकारणाभावेन च न व्यवसायतद्विषयकज्ञानयोर्यौगपद्यप्रसङ्ग इति तत्त्वम्। वेदान्तिनां तु मनसः सावयवत्वेन प्रदेशभेदेन क्रियायौगपद्यं स्पष्टमेव। तैः पुनरियं प्रक्रियैव नाद्रियत इत्यन्यत्।

**धर्मिज्ञानजनकस्यैवेति**। अत्राधिकं प्रमात्वनिरासशेषे शारदायां द्रष्टव्यम्।

मूलपृष्ठम् ४७—**उक्तिवैचित्र्यमात्रमिति**। तृणोलपन्यायेन सामान्याद्विशेषस्य पृथगुपादानसम्भव इति भावः।

**हेतुत्वाभिप्रायेणेति**। तथा च वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमते यथाश्रुतत्याग इति भावः। **आवश्यकत्वादिति**। अन्यथा दर्शितदिशा घटादिज्ञाने स्वविषयत्वस्य साक्षिसिद्धयौपयिकज्ञातैकसत्त्वस्य च लाभासम्भवादिति भावः।

**निराबाधमिति**। न च व्यावहारिकज्ञानांशे साक्षिणि प्रमात्वसम्भवेऽपि शुक्तिरूप्याद्यंशे इव तदाकाराविद्यावृत्त्यंशेऽप्यागन्तुकदोषजन्ये व्यवहारकालाबाध्यविषयकत्वघटितप्रमात्वमसम्भवदुक्तिकमिति वाच्यम्, शुक्तौ रूप्यं नासीत्, तज्ज्ञानं तु समजनीत्यनुभवमनुरुध्येत्थमभिधानात्। प्रातिभासिकविषयानुत्पत्तिपक्षे प्रमात्वस्य तद्वति तत्प्रकारकत्वरूपतायां त्वित्थमेवाभिधानं शोभतेतराम्।

मूलपृष्ठम् ४८—**सार्वदिकस्येति**। घटादिज्ञानानन्तरं यावति समये संशयाद्यनुपलम्भोऽनुभवसिद्धस्तावतः समयस्योपलक्षणमिदम्, अतएव संस्कारप्रतिबन्धककालविशेषव्यवधानाद्यनुपनिपातस्थलीयज्ञानस्य पक्षत्वमिति प्रागुक्तम्।

**यत्संवेदनमिति**। व्यवसायो वा साक्षी वा मतभेदेन। परमते व्यवसायस्यैव स्वविषयकस्यात्मरूपत्वात्।

**तद्विषयीभूतमिति**। साक्ष्यात्मकसंवेदनविषयताया घटादिज्ञाने सत्त्वेऽपि तद्विषयताभिधानं निष्फलप्रायमित्यतो व्याचष्टे। **तत्प्रयुक्तेत्यादि**। सर्वरूपोपपन्नहेतुज्ञाप्यत्वबोधस्य निगमनफलस्य 'तेने'त्यादिप्रागुक्त्यैव लाभान्निगमनपरतया 'अत' इत्यादिवाक्यावता-

रणं परित्यजन्नाह अथवेति स्वप्रकाशत्वव्यवस्थिताविति । फलीभूतस्वप्रकाशताश्रयस्य मतभेदेन घटादिज्ञानस्य तत्साक्षिणो वेत्यादिः ।

प्रमिणोमीति । स्वप्रकाशे विषयीभूतबोधनिष्ठप्रमात्वस्याभाने तत्राप्रमात्वज्ञानसम्भवेन तत्प्रयुक्तविषयसन्देहे इष्टापत्तिपरिहारसूचनाय प्रमिणोमीत्युक्तम्, तेन स्वप्रकाशे प्रमात्वभानलाभः, प्रमात्वभानं पुनः घटत्वेनेमं घटं जानामीत्यादिरीत्यापि सम्भवतीत्याकारे नात्राग्रहः। स्वविषयत्वमते च घटत्ववति घटत्वप्रकारकत्वादिरूपं प्रामाण्यं स्वतो ग्राह्यमनुभवबलात्। न तु तादृशप्रकारकत्ववति तादृशप्रकारकत्वप्रकारकत्वादिरूपमपि, विषयापर्यवसानेनानुभवविरोधात् । अत एव वेदान्तिमतेऽपि विषयीभूतज्ञानगतप्रामाण्यं साक्षिग्राह्यम्, न तु तादृशप्रामाण्यवति तादृशप्रामाण्यप्रकारकत्वं स्वगतमपि, तादृशप्रामाण्यवत्तया साक्षिणोऽपि तत्र प्रवेशेन स्वाविषयकस्य तस्य स्वनिष्ठप्रामाण्यग्राहकताया असम्भाव्यत्वाच्च । अत एव ज्ञानांशे प्रमात्वस्याप्रामाण्यग्रहानास्कन्दितत्वस्य च सूचनाय मूले ज्ञातत्वमनुक्त्वा प्रमितत्वाभिधानमिति टीकायां प्रागुक्तम्, न तु ज्ञानांशे यत्प्रमात्वं स्वनिष्ठं तद्विषयकत्वसूचनायेति। एतेन स्वप्रकाशे स्वनिष्ठप्रामाण्यस्याग्राहिणि तस्य सन्देहसम्भवेन विषयपर्यन्तं सन्देहसम्भवो भवतोऽपि समान इति नाशङ्कनीयम्; स्वप्रकाशस्य ज्ञानांशेऽगृहीताप्रामाण्यकत्वस्वभावतायाः फलबलेन वक्तव्यत्वात्। न चैवं स्वप्रकाशतोपगमोऽकिञ्चित्करः, घटादिबोधेऽपि स्वभावस्यैवासन्दिग्धत्वादिप्रयोजकतायाः सुवचत्वादिति वाच्यम्, ज्ञानत्वेच्छात्वाद्यनेकधर्माणां तथात्वकल्पनप्रसङ्गेन शारदायां दत्तोत्तरत्वात्। कदाचिदज्ञाततया कदाचिच्च ज्ञाततया स्वनिष्ठप्रामाण्यस्यापि साक्षिणा ग्रहणसम्भवाच्च। एतद्ग्रहणसाफल्योपपादकमपि स्वप्रकाशत्वमेव, अन्यथाऽत्रापि सन्देहादेरनवस्थानस्य वा प्रसङ्गात् । सर्वमहं स्वात्मतया वेदान्ताद्वेद्मीत्यनुभवेन साक्षिणोऽपि ज्ञाततादिना स्वविषयकत्वस्यानपलपनीयत्वादिति ।

तज्ज्ञानसामान्यस्वरूपसंशयेति । ज्ञानसद्भावसन्देहे विषयसन्देहसम्भावनाया द्रढिम्ने सामान्यपदमुपात्तम्, यदा तद्विषयकयत्किञ्चिज्ज्ञानसत्तासन्देहेऽपि तद्विषयकज्ञानान्तरानिश्चयदशायां तदस्तित्वसन्देहः सम्भवत्येव, तदा तद्विषयकज्ञानसामान्यसद्भावसन्देहदशायां स सुतराम्, क्वचिन्निश्चितस्यैव चापरत्र सन्देहो ननु निश्चितनिश्चयकस्येति निश्चयस्य सन्देहे तद्विषये कथं संशय इति नापाततः शङ्कनीयम् ।

अयंघट इति ज्ञानापलापापत्तिश्चेति । जात्यखण्डोपाध्यतिरिक्तस्य न स्वरूपतो भानमित्यस्याप्रामाणिकत्वेनायंघट इत्यत्र स्वरूपतो ज्ञानभानेन नोक्तज्ञानापलाप इत्यावेदितं दर्शनसर्वस्वे, एवं च पूर्वदूषणेष्वेव निर्भर इति ।

एकस्मिन् विषयविषयिभावोपगमनिबन्धना इति । नन्विहैकत्र विषयविषयिभावत्यागो 'नहि स्वमन्तर्भाव्य कयाचि' दित्यादिना परतो मूले स्वविषयत्वरूपस्वप्रकाशत्वापादनम्, एकत्र क्रियाकर्मभावासम्भवमाशङ्क्य कथञ्चित्कर्मव्यवहारोपपादनम्, कर्मत्वखण्डनम्, विषयविषयिभावस्यैकत्रासम्भवमाशङ्क्य तदुपपादनं चेति सर्वमसमञ्जसं स्यात्, तस्माद्विषयविषयिभावत्यागो 'अथवा स्वात्मना सहे' त्यादिना ग्रन्थेनैव कर्तव्यो नतु ततः पूर्वमिति प्रकृतपङ्क्तिः कथञ्चिदन्यथैव व्याख्यायतामिति चेन्न, तादृशग्रन्थानन्तरमपि 'तथाऽन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीतिव्यवहारान्यथानुपपत्त्या त्याज्य' मित्यत्रैकत्र विषयविषयिभावसमर्थनेन सन्दर्भांशुद्धितादवस्थ्यात्।

तत्रत्यशारदोक्तरीत्या तस्य दृष्टान्तपरताया अपि सम्भवेऽपि स्वप्रकाशे विषयविषयिभावमपरित्यज्यात्र मानमेयभावाश्रितदोषसामान्याभावाभिधानमसङ्गतं स्यात्, तदपरित्यागपक्षे हि व्यवसायस्येव स्वप्रकाशस्यापि प्रमाणाधीनसिद्धिकत्वेनानवस्थादिना प्रमाणखण्डनावतारभागितेत्याशङ्क्य तस्य स्वतः सिद्धत्वेन न प्रमाणापेक्षेत्यभिप्रायेण 'स्वप्रकाशे तु मानमेयभावे'त्यादिग्रन्थप्रवृत्तिरित्येव वक्तव्यं स्यात्, परन्तु माऽस्तु परापेक्षा, स्वापेक्षाऽपि स्वात्माश्रयं नातिक्रामति। न चोत्पत्तिस्थित्योस्तावन्नात्माश्रयः, नापि ज्ञप्तौ, स्वविषयकं स्वमुच्यते न तु स्वज्ञप्त्यधीनज्ञप्तिकं स्वमिति वाच्यम्, एतत्पङ्क्त्यवतरणशारदोक्तदोषाणां तथापि सद्भावात्। तत्र यद्यपि 'अयं घट' इत्यनुभवापलापापातः परिहृतोऽनुपदम्, स्वजनकेन्द्रियसन्निकर्षानाश्रयत्वेन स्वाविषयत्वानुमानं तु 'शेषं चेश्वराभिसन्धा' विति पङ्क्तिशारदायां प्रतिविधास्यते, तथापि दूषणद्वयं पृष्ठारूढमेव, तत्राद्यमात्माश्रयविघयोपन्यस्यतामन्यथा वेति न कश्चिद् विशेषः, स्वं यदि स्वज्ञप्त्यधीनज्ञप्तिकं स्यात्स्वभिन्नं स्यादितिवत् स्वं यदि स्वविषयकं स्यात्, स्वसम्बन्धि स्यादिति वा तदा स्वभिन्नं स्यादित्यापादनस्य निरङ्कुशत्वात्।

विषयविषयिभावश्च भेदाभेदपक्षसाधारण्येनैव महता प्रबन्धेन चतुर्थे मूलतच्छारदयोर्विशीर्णीकृतः। अतएव परविषयत्वमेव मिथ्यात्वव्याप्यमस्तु न तु स्वविषयत्वमिति न मनसि कर्तव्यम्। अमूदृशदोषराशेराशयानधिशायित्वे 'अथवा स्वात्मना सहे' इत्युत्तरग्रन्थेनापि विषयविषयिभावस्यैकत्रानुपगमस्य निर्निमित्तत्वापाताच्च। परतोऽनुपदं 'स्वप्रकाशत्वाङ्गीकारादेवानुभवस्य सर्वदोषहाने' रिति पङ्क्तेरपि स्वारस्याच्च न विषयविषयिभावसंस्पर्शोऽत्र। तस्मात्स्फूर्तिवैचित्र्येणात्र स्वक्तस्यापि पुनः क्वचिदंशे समर्थनसम्भवेन, तार्किकादिं प्रति स्वविषयत्वरूपस्वप्रकाशत्वस्य वेदान्तोदितस्वप्रकाशत्वपूर्वभूमिरूपस्यापादानेनाप्यभीष्टस्य सम्भाव्यत्वेन, पाठक्रमापेक्षयाऽर्थक्रमस्य बलीयस्त्वेन च यथास्थितव्याख्या निकषपरीक्षितैवेति।

मूलपृष्ठम् ४६—तत्पुरुषीयज्ञाने तत्पुरुषीयसंशयादिविषयतापत्तिपरिहाराय तत्पुरुषीयनिश्चयस्यैव तदीयज्ञानविषयकस्यापेक्षेति काऽपेक्षा तत्र परं प्रति प्रतिपादनात्मन उपन्यासस्येत्याशयेन प्रतिपत्तिमात्रपरतया व्याचष्टे अनुपन्यासे अप्रतीताविति। एतेनाग्रे 'घटसत्तां हि व्यवहरते' त्युत्तरसन्दर्भस्य साक्षात्प्रकृतानुपयोगितामालोच्य दृष्टान्तपरतया योजनस्यौचित्यमपि समर्थितम्।

मूलपृष्ठम् ५०—आपादकत्वेनाभिमताया असिद्धिरिति। शेषासिद्धिविशेषणीभूतशेषस्यासिद्धेः, तत्सिद्धौ च शेषत्वव्याघातादितिभावः।

प्रमाणनिश्चयस्यासार्वत्रिकत्वादिति। इन्द्रियस्याज्ञातस्यैव करणत्वात्। अन्यथासिद्धत्वाच्चेति। प्रमाणनिश्चयस्य प्रमानिश्चयपर्यवसायिताया उक्तत्वात्। अन्यथेति। प्रमाणनिश्चयस्यावश्यापेक्षणीयत्वोपगमे इत्यर्थः।

इतिकेचिदिति। स्वविषयत्वनिश्चयस्य प्रतिज्ञानमपेक्षणीयत्वोपगमे घटं जानामीत्यत्र घटविषयकत्ववज्ज्ञानविषयकत्वस्याभानेनानुभवविरोधः, स्वरूपतस्तद्भानोपगमेऽपि च तत्र विवादाभावप्रसङ्ग इतिमत्या केचिदित्युक्तम्। 'व्यवसायस्यानुव्यवसायनियमा' दित्यनेनाऽऽशङ्कितामव्यवहितधारां 'न च वाच्यमवश्यवेद्यते' त्यनेनाशङ्कितं ज्ञानधारासामान्यविरहं

च निराकृत्य व्यवहितज्ञानधारां निराकर्तुमाशङ्का 'अथ नान्यवधानलग्नवित्ती' त्यादिना मूले इति सन्दर्भशुद्धिः।

मूलपृष्ठम् ५१—ज्ञानज्ञानत्वेन सर्वा वित्तिरनुभूयत इति। ज्ञानं जानामीत्येतावन्मात्रानुभवाभावेन ज्ञानज्ञानत्वेनेत्यत्र प्रथमज्ञानपदेनायं घटइत्यतो विप्रकृष्टं किञ्चिद्विषयकत्वविशिष्टं ज्ञानं यदि गृह्येत तदाह विषयीभूतेति। अयं घट इति ज्ञानस्यैव तेन विवक्षणेऽपि यावज्ज्ञानभानं घटज्ञानं जानामीत्यत्र न लौकिकसन्निकर्षसाध्यम्, एवं प्रथमपक्षेऽपित्याशयेनाह अनुमाननिराकरणेति। घटं जानामीत्यत्रापि घटज्ञानत्वेन न निखिलतज्ज्ञानभानसम्भवः, सर्वेषामवर्तमानतया वर्तमानतया सर्वावगाहिन्यास्तस्याः प्रतीतेरप्रमात्वापातात्, एवं घटज्ञानं जानामीत्यस्या अपीत्यपि द्रष्टव्यम्।

विषयीकृत्येति पर्यवसितार्थ इति। ल्यप्प्रयोगोऽत्र मुखं व्यादाय स्वपितीतिवत्। न च तत्र मुखव्यादानोत्तरकालेऽपि स्वापो न चेह तथा, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादितिवाच्यम्, मुखव्यादानकालिकत्वविवक्षयापि लक्षणया तादृशप्रयोगस्यापलपितुमशक्यत्वात्। लक्षणायाश्च प्रकृतेऽपि सम्भवात्।

मूलपृष्ठम् ५२—बीजाङ्कुरवदिति। सृष्टिप्रलयवादमनसिकृत्य तत्सिद्धेःपुरेति यावद् दार्शनिकैः प्रवर्तितोऽयमनवस्थाभासदृष्टान्तः, अन्यथा सर्गाद्यकाले ईश्वरेच्छादिवशाद्बीजस्याङ्कुरस्य वा प्रथममुत्पत्तौ क्वानवस्था। 'उद्भिद्वृश्चिकवद्वर्णा' इतिकुसुमाञ्जल्युक्तनयश्चात्रानुसन्धेयः। बीजपदमङ्कुरसामग्रीपरमिति तु निष्कर्षः, तस्याः प्राक्सम्पादितादृष्टघटितत्वावश्यम्भावेन प्रवाहानादित्वोपपत्तेः, एवमङ्कुरस्य प्रथमं भगवतोत्पादने तत्सामग्रीमादाय प्रवाह इति। 'बीजाङ्कुराख्यदृष्टान्तः सदा साध्यसमो हि स' इति श्रीगौडपादाचार्योक्तिमनुसृत्याह तार्किकमतेनेति। न त्वनिर्वचनीयवादिमतेन। बीजाङ्कुरव्यक्त्योः सादित्वेन प्रवाहस्य प्रवाह्यतिरेके प्रमाणमलभमानस्यानादित्वानुपपत्तेः। स्वसजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वरूपमनादित्वं तु तदा स्यात्, यदि प्रत्यक्षव्यक्तिसजातीयव्यक्तिः प्रमाणपद्धतिमवतीर्णा स्यात्, अन्यथा तद्ध्वंसस्याप्रमितेः, न च सामान्यकार्यकारणभावस्य प्रामाणिकत्वं विना तादृशव्यक्तिप्रसिद्धिः, नचेमां विना तस्य प्रामाणिकत्वम्, व्यभिचारसन्देहात्, लाघवज्ञानस्योत्तेजकतायां मानाभावात्, अन्यथा चार्वाकादेरपि व्याप्यव्यापकभावबोधोदयप्रसङ्गादिति दुरुत्तरान्योन्याश्रयादिना शारदायां सामान्यकार्यकारणतायास्तुरीये निरासेन न प्रवाहानादिता प्रमाणपथगामिनीत्यनवस्था दोषावहैव, प्रमाणामूलकत्वात्। समन्वयसूत्रभामत्यां व्यक्तिभेदेनानवस्थाया अदूषणत्वमत्रैव तुरीये चान्योन्याश्रयादेर्व्यक्तिभेदेनाभासत्वं यदुक्तम्, तत्तु प्रक्रियादशायां न त्वनिर्वचनीयताचरणरेणुशिरोधारणोद्धुरीकारदशायाम्। तस्मादादावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेत्यत्रैव शान्तिरिति।

तार्किकमते भावत्वे सतीत्यादि। अत्र तार्किकपदं प्रसिद्धतार्किकपरम्, प्राचीनैः कैश्चित्पार्थिवपरमाणुश्यामताया अनादिभावरूपतामुपेत्यापि सदातनत्वानुपगमात्। सर्वान्तर्गतत्वानङ्गीकारेऽनवस्थेति। सर्वं ज्ञानं ज्ञानान्तरवेद्यमिति ज्ञानस्य सर्वान्तर्गतत्वमनु-

वेत्य स्वविषयकत्वानुपगमे ज्ञानान्तरवेद्यताव्याप्यतावच्छेदकावच्छिन्नशून्यतया च ज्ञानान्तरविषयत्वस्याप्यनुपगमे सर्वथैवावेद्यत्वेनाप्रामाणिकत्वमेव प्रसज्येतेति पृथगेव तस्य ज्ञानान्तरवेद्यतानियतेरुपश्लेषिताया वाच्यत्वेऽनवस्थेति भावः।

दोषहानिमेवाहेति। यद्यपीदृशस्थले भाविकालिकताया दोषाभावाभिधानेऽबाधेपि वक्ष्यमाणत्वादिति प्रयोगो न ग्रन्थकृतां शैलीसिद्धः, तथापि वक्ष्यमाणत्वादिति लेखनानन्तरं कारणविशेषादीषद्विरामे विरामाभावेऽपि वा तदैव वक्तुमौचित्यमवेत्य दोषहानिनिरूपणे प्रवृत्तिसम्भवेन न वक्ष्यमाणत्वादिति प्रयोगे पर्यनुयोगयोग्यता, 'आचार्याः कृत्वा न निवर्तन्ते' इति पतञ्जल्युक्तेः पश्चात्परिवर्तनानादरसम्भवाच्च। न चात्रोत्तरत्रापि दोषहानिरुक्ता विलोक्यत इत्याशयेन प्रकाशात्मतामात्रस्येत्यादिग्रन्थस्यैव तन्निवेदनपरतयोपवर्णनमादृतम्।

नासङ्गतिरिति। तादृशाज्ञानाक्रान्तचितोऽभातत्वेन स्वतः सिद्धत्वस्य दूरोत्सारितत्वादिति भावः।

मूलपृष्ठम् ५३—मात्रपदमिति। विशिष्टरूपेणोक्तचितोर्व्यावृत्तावपि चिदात्मनाऽस्ति सङ्ग्रह इति मात्रपदोपादाने तयो र्व्यावृत्त्या परतः सिद्धत्वेन मिथ्यात्वं नाशङ्कनीयमितिभावः। एवकारस्तु मात्रपदस्येतरव्यावृत्तिपरतां पुष्णाति। अथवोक्तचितोरेव विशिष्टरूपेण व्यावृत्तये मात्रपदम्, एवकारस्तु जडात्मनां धर्माणामिति विभजनीयम्।

न शुद्धात्मकतेति। न शुद्धात्यन्ताभेद इत्यर्थः।

अभावस्य तुच्छत्वादेवेति। अधिकरणभिन्नत्वेन रूपेणेदं द्रष्टव्यम्।

केवलाधिकरणमिति। कैवल्यस्यातिरेके सिद्धोऽभावातिरेकः, अनतिरेके तु घटतदभाववद्भूतलयोरविशेषप्रसङ्ग इत्यत आह तत्कालसम्बन्ध इति। कालं प्रति परिचायकतयाऽभावत्वप्रकारकप्रतीतेरेवोपादाने तस्य एवाभावरूपत्वमुचितमित्यनुशयेनाह स्वप्रकाशरूपमिति।

मूलपृष्ठम् ५४—नेदं रजतमित्याद्यनुभूयमाननिषेधेति। प्रातीतिके व्यावहारिकतादात्म्यारोपोपगमपक्षे एतद्भेदप्रतियोगित्वस्य व्यावहारिके भानेऽपि प्रातीतिकव्यावहारिकसाधारणरजतत्वेन भ्रमे रजतभानोपगमपक्षेऽत्यन्ताभावप्रतियोगित्वेनेव भेदप्रतियोगित्वेनापि प्रातीतिकस्य भानसम्भवः। नात्र रजतमिति प्रतीत्युपादानं तु मतद्वयसाधारणम्।

भ्रमविषयनिषेधवदितिमूले षष्ठीसमर्थाद्वतिः, तथा च भ्रमविषयनिषेधस्येव प्रकृतनिषेधस्यापि प्रतियोगिनः सर्वथैवासिद्धत्वेऽपि नानुपपत्तिरित्यक्षरार्थः। तत्र प्रतियोगिपदस्योभयनिषेधप्रतियोगिसाधारणत्वेऽपि प्रकृतनिषेधे ग्राह्यं प्रतियोगिनमाह प्रतियोगिनः प्रपञ्चस्येति।

अवान्तरबोधं विशिष्टविषयकमिति। सत्यादिपदानां गगनादिसाधारणेन ब्रह्मज्ञानेतराबाध्यत्वादिनाऽबाध्यत्वादिना वा धर्मेण विशिष्टे शक्तिरिति मतेनेदम्। व्यावहारिकसाधारणतयैव चायं धर्मो न ब्रह्मरूप इत्यवेत्य स्वन्यूनसत्ताकप्रवृत्तिनिमित्ताभिधानं ब्रह्मण्यग्रे।

तेषां व्यक्तिमात्रशक्ततापक्षे तु प्रथममेवं निर्विकल्पमतिप्रसवइत्युपपादितं पुरा। किञ्चिद् पावच्छिन्नलक्ष्यत्वस्याभावेनेति। न च लक्ष्यताया ब्रह्मनिष्ठायाः किञ्चिद्धर्मावच्छिन्नत्वमपि लक्ष्यतात्वेन साधनीयम्; अप्रयोजकत्वात्, तात्पर्यमात्रप्राणिताया लक्षणाया अनवच्छिन्नाया अपि सम्भवात्।

बाधाच्चेति। वेदान्तिप्रभृतिभिरप्रसिद्धप्रतियोगिकाभावस्याभ्युपेतत्वेनेदम्, अन्यथा तु साध्याप्रसिद्धिरेव दूषणं द्रष्टव्यम्।

स्वप्रकाशे च मानमेयभावव्यवस्थाया अभावादेवेत्यादिना विषयविषयिभावस्य त्यक्तत्वेऽपि 'अथवा स्वात्मना सह' इत्येतत्पर्यन्तमभ्युपेत्यवादेन तं समर्थयितुमाशङ्कते मूले मूलपृष्ठम् ५५ ननु स्वप्रकाशत्वमित्यादिना।

यद्यपि तत्प्रागभाववति काले तस्य सामान्यत एवासम्भवः, तथापि तत्प्रागभावाधिकरणे तदत्यन्ताभावस्याप्युपगतत्वेनात्यन्ताभावस्य च काले प्रदेशभेदेन प्रतियोगिना समावेशसम्भवेनाह एकावच्छेदेनेति शेष इति।

परसमवेतेतियथाश्रुतमव्यावर्तकम्, परत्वस्य केवलान्वयित्वात्, यदि तु शब्दस्वाभाव्यात्स्वातिरिक्तसमवेता या क्रिया तज्जन्यफलशालित्वं स्वनिष्ठं सदेव कर्मत्वम्, चैत्रनिष्ठसंयोगजनकक्रियायां तु चैत्रातिरिक्तसमवेतत्वं नास्तीत्यदोष इत्युच्यते तदापि स्वत्वावच्छिन्नान्यत्वस्य स्वत्वानुगमेऽप्रसिद्धिः, तदननुगमे तु नैकधातुस्थलीयकर्मणामप्युपग्रहइत्याशयेन क्रियायां कर्मत्वाभिमतातिरिक्तसमवेतत्वोक्त्या कर्मत्वाभिमते क्रियाया अनाश्रयतां लब्ध्वा कर्तारं प्रकारान्तरेण व्यावर्तयति—

मूलपृष्ठम् ५६—प्रकृतधात्वर्थेत्यादि। फले क्रियाजन्यत्वं त्यक्त्वा प्रकृतधात्वर्थतावच्छेदकत्वोपादानं त्वपादानादावतिव्याप्तिवारणफलकमित्यग्रे तत्र तत्र टीकायां व्यक्तम्। विषयेऽज्ञानाविषयत्वमादायेति। अत्र विषयपदं घटादिविषयपरम्, नतु ज्ञानपरमपि तस्य ज्ञातैकसत्त्वेनाज्ञानाप्रसक्तेस्तद्विषयताभङ्गस्याप्यनाश्रयत्वात्। ज्ञानं ज्ञातमितिमितेःस्वतःसतोऽनुत्पत्त्या ज्ञाततायाः अस्वप्रकाशवादिनैवाभ्युपगत्या च द्वितीयपक्ष एव ज्ञानसाधारण्यं द्रष्टव्यम्। मूलं त्वापाततो व्यवहाररूपफलमादाय योजनीयम्, न तु वस्तुगतिरेषा, धात्वर्थतावच्छेदकताया अग्रे वर्णितरीत्या फलेऽवश्यं वाच्यत्वात्, न च प्रसक्तप्रकाशतया ब्रह्मण एवाज्ञानविषयत्वेन तदवच्छेदके घटादावपि कथमज्ञानविषयताभङ्गरूपफलप्रसिद्धिः; अज्ञानविषयतावच्छेदकेऽपि घटादाववच्छेदकत्वरूपविषयताया आवश्यकत्वात्, नहि विशेष्यतावच्छेदकं न विषयः। यदि त्वज्ञानस्याश्रय एव विषयः, मन्दिरावच्छेदेनाकाशे शब्द इव च घटाद्यवच्छेदेन ब्रह्मण्यज्ञानमिति घटादाववच्छेदकतैव नत्वाश्रयत्वनियताज्ञानविषयता अन्यथा मन्दिरस्यापि शब्दाश्रयत्वापातादित्यागृह्यते, तदा घटादौ कर्मत्वव्यवहारोपपत्तयेऽज्ञानविषयत्वतदवच्छेदकत्वान्यतराभावस्यैव फलत्वं वक्तव्यम्। यदि त्वज्ञानविषयतेव ज्ञानविषयतापि ब्रह्मण्येव, ज्ञानाज्ञानयोः समानविषयत्वौचित्यात्, घटादौ तु ज्ञानविषयता

१—एतदुत्तरपङ्क्तौ 'कर्मचे' त्यस्याग्रे कारणमिति त्रुटितं सत् 'न च तस्मादेवेति' चतुर्थपङ्क्तिमुखे निपतितम्।

वच्छेदकतैवेति कश्चिद्ब्रूयात्तदा घटादौ ज्ञानकर्मताव्यवहारो गौणो ज्ञानात्यर्थतावच्छेदकाज्ञानविषयत्वाभावरूपफलावच्छेदकतयैव समर्थनीयः।

घटादावप्यतिव्याप्तिरिति। कर्मत्वव्यवहारातिव्याप्तिर्न तु प्रयोगातिव्याप्तिः। वृत्ते कर्मत्वमपीति। वृत्ते कर्मत्वव्यवहारोऽपीत्यर्थः।

मूलपृष्ठम् ५७—एतेनेति। लक्षणानां दुर्निरूपत्वे कस्य कर्मसञ्ज्ञा, कस्य चापादानसञ्ज्ञेति दुरवधारणत्वेन 'वस्तु कर्म' 'वस्त्वपादान' मिति वा 'कर्म' 'अपादान' मित्येवमेव वा सञ्ज्ञासूत्राणां प्रणयनप्रसक्त्या तद्घटकलक्षणांशानां वैयर्थ्यप्रसङ्गेन व्यवहारातिप्रसङ्गस्य दुर्वारत्वेन चेत्यर्थः। परस्पराधीननिरूपणकतयेति। प्रमात्वसत्यत्वयोरित्यादिः। प्रतीतेः प्रमात्वं विषयसत्यतायामायतते विषयसत्यता च प्रतीतेः प्रमात्वे इतिभावः।

अन्यतरत्वनिरुक्तिस्त्विति। अत्रेदमप्यवगन्तव्यम्—घटं पटं वाऽऽनय घटपटान्यतरमानयेत्यनयो र्घटं पटं कटं वाऽऽनय घटपटकटान्यतममानयेत्यनयोश्च व्यवहारयोः परस्परव्यवच्छेदरूपविकल्पविषयकत्वे न विशेष इति सार्वजनीनम्, नहि तथा नियुक्तः कदाचिद्द्वयं त्रयं वाऽऽनयति, भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्व, भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वयोस्त्वनुगतत्वात् तथानियुक्तस्य द्वयोस्त्रयाणां चानयनप्रसङ्गो निरुपप्लवः। नहि तादृशभेदवत्त्वं यदैकस्यां व्यक्तौ वर्तते न तदाऽन्यत्रेत्यत्र नियामकमस्ति। तस्मान्नेदृशदिशाऽन्यतरत्वान्यतमत्वनिरुक्तिःप्रामाणिकी। एतेन घटपटमात्रमुख्यविशेष्यकधीमुख्यविशेष्यत्वं घटपटान्यतरत्वम्, घटपटकटमात्रमुख्यविशेष्यकधीमुख्यविशेष्यत्वं तत्त्रितयान्यतमत्वमिति निरुक्तिरपि निराकृता, द्वयाद्यानयनप्रसङ्गात्। विशेष्यताया विशेष्यतात्वेन निवेशमनादृत्य प्रातिस्विकरूपेण निवेशे च शब्दैक्यं परं न त्वर्थैक्यमिति नानुगमवार्तापीति।

प्रयोगातिप्रसङ्गाच्चेति। न प्रयागमित्युक्तस्थले एव प्रयागमितिप्रयोगो मैत्रगमनकर्म प्रयाग इति व्यवहारो वा स्यादिति भावः।

प्रकृतधात्वर्थप्रधानीभूतेत्यादि। अग्नेर्माणवकं वारयतीत्यत्र संयोगाद्यनुकूलव्यापाराभावप्रयोजकव्यापारार्थकवारयतेः कर्मताऽग्ने र्मा भूत, माणवकस्यैव तु भवेदित्येतदर्थं कर्तु र्व्यापारलाभाय प्रधानीभूतेति। गां पयोदोग्धीत्यत्रविभागानुकूलव्यापारानुकूलव्यापारार्थकदुहेःकर्मता पयसः स्यादिति भावेन जन्यत्वमपास्य प्रयोज्यत्वमुक्तम्, माषेष्वश्वं बध्नातीत्यत्र माषाणां कर्मतावारणाय फले प्रकृतधात्वर्थत्वमुक्तम्, बन्धनप्रयोज्यफलस्य भक्षणस्य माषेषु सत्त्वेऽपि न तस्य प्रकृतधात्वर्थत्वम्। निरस्तमिति। अत्र चैत्रश्चैत्रं गच्छतीत्यतिप्रसङ्गस्य चैत्रःस्वकर्तृकगमनकर्मेति व्यवहारातिप्रसङ्गस्य वा भङ्गाय विवक्षणीयस्य प्रकृतधात्वर्थव्यापारानाश्रयत्वस्य विशेषाभावरूपस्यातिप्रसक्ततया सामान्याभावरूपताया एव वक्तव्यत्वेन वक्ष्यमाणस्मृतिसामान्यान्योन्याभावनिरासरीत्यवतारः, एवं विशेष्यतावच्छेदकेषु प्रत्येकमिलितविकल्पानुपपत्तिरित्यादिकमपि द्रष्टव्यम्। वादिना कर्मलक्षणं नेदानीमुत्पादितं किन्तु प्रोक्तमेवेत्याशयेन व्याचष्टे कृतं प्रणीतमिति[1]। लक्षणस्य तुच्छताध्वननाय प्रोक्तत्वमनभिधाय प्रणीतत्वोक्तिः।

---

१—टीकायां प्रणीतमिति मुद्रितमशुद्धम्।

मूलपृष्ठम ५८—आश्रयानवच्छिन्नत्वस्य विशेषणीयतयेति। संयोगानुकूलव्यापारा-र्थकगमिकर्मण्यव्याप्तिस्तु नास्ति, संयोगस्याप्राप्तप्राप्तिरूपत्वेऽपि संयोगत्वेनाखण्डेनैव गम्य-र्थतावच्छेदकतयाऽऽश्रयस्य तत्रानवच्छेदकत्वात्। सुधायामिति। वर्धकपदव्याख्यान शे-शेषः। नामानुशासनममरकोषः।

स्वभिन्नत्वेन ज्ञानमिति। प्रयोगार्थं विदुषस्तादृशज्ञानापेक्षायामपि नाहार्यं त-दुर्लभमित्यपि द्रष्टव्यम्।

मूलपृष्ठम् ५९—ईश्वराभिसन्धेरप्यत्वेऽनुपलम्भेऽपि वक्तव्यशेषमौचित्यप्राप्तं प्रा तद्बीजन्येत्यादि। उपेक्षणीये व्यवहाराभावेनाव्याप्तिमाशङ्क्याह ज्ञानविषयत्वमेव वेति।

प्रत्यक्षत्वस्येन्द्रिययोग्यतावच्छेदकत्वेति। प्रत्यक्षविषयत्वस्येन्द्रियग्राह्यतावच्छेदक-त्वेत्यर्थः।

मूलपृष्ठम ६०—मूले तथा विनापि सम्बन्धिभेदमिति। न च सम्बन्धसम्बन्धिनोः परस्परं क्वचिद् भेदेऽपि सम्बन्धिनोः परस्परं भेदःसार्वत्रिकः, घटसमवायस्थले स्वरूपसम्बन्ध-स्यानतिरेकेऽपि समवायकपालयोर्द्वैतादिति वाच्यम्, समवायप्रतियोगिकस्वरूपसम्बन्धे सम-वायात्मके समवायप्रतियोगिकत्वरूपसम्बन्धस्य सत्त्वेन तदीयसम्बन्धिभेदाभावात्, अत एवो टीकायां 'एवं च स्वरूपातिरिक्तसम्बन्धस्यैव भेदव्याप्यत्व' मिति। तादृशप्रतियोगिकत्वादेर्वि स्वरूपसम्बन्धात्मकतया स्वरूपातिरिक्तत्वनिवेशेन वारणात्। एवं च विनापि सम्बन्धिभेद-मित्यस्य विषयविषयिभावरूपसम्बन्धस्य सम्बन्धिनोःप्रकृते भेदं विनैवेत्येकोऽर्थः, ज्ञान-स्वनिरूपितविषयत्वविषयित्ववत ऐक्यात्, विषयविषयिभावात्मकसम्बन्धस्य सम्बन्धि-सकाशाद्भेदं विनैवेत्यपरोऽर्थः, तस्य सम्बन्धिरूपतयैवाग्रे पारमार्थिकत्वाभिधानसङ्गतेरिति

रूपभेदेनेति। तत्तद्व्यक्तित्वज्ञानत्वात्मकरूपभेदःप्रकृते। किं विषयता-समानेति। तत्तद्व्यक्तित्वस्य ज्ञानभिन्नाभिन्नत्वे तादृशरूपवतःस्वरूपसम्बन्धात्मकतयाऽभ्युपग-विषयत्वस्य ज्ञानभिन्नाभिन्नत्वानभ्युपगमो निर्निमित्तः, विरोधस्योभयत्र समानत्वात् भेदाभेदयोरेकस्य मिथ्यात्वोपगमेन तत्समाधानस्यापि समानत्वच्चेतिभावः।

मूलपृष्ठम् ६१—कालिकव्याप्तेरसम्भवेऽपीति। इदमार्जवेनोक्तम्, वस्तुतस्तु य-ज्ञानत्वं तदा सविषयकत्वमितिव्याप्तिरपि सम्भवन्ती न प्रतिकूला, मायाचित्सम्बन्धात्म-कालस्यापि सविषयकत्ववन्मायातीतावस्थायामभावेन व्यभिचाराभावात्। अत्रार्जवं कि-तिचेत्, चितावेव कालत्वाभ्युगमवाद इतिगृहाण। तथासति मुक्तिकालमन्तर्भाव्य व्यभि-चारावश्यम्भावात्।

मूलपृष्ठम् ६२—गुरुब्रह्मवादिपक्षयोरिति। गुरुरिह प्राचीनःप्राभाकरः, तन्मत ए-भेदे विषयविषयिभावानुपगमस्य प्रत्यक्षचिन्तामणौ निरूपणात्। समुदायत्वेन कुटस्य ज्ञान-दिति। न च तत्तद्धातुवृत्तिकुटत्वादिविशेषधर्मस्यैवोद्देश्यतावच्छेदकतया समुदायत्वे-बोधेन कथं निर्वाह इति वाच्यम्, तादृशबोधानन्तरं प्रत्येकपरिसमाप्तबोधस्यापि गणपाठस्य

कारेण पुनरनुसन्धीयमानापेक्षितप्रकृतसूत्रैकदेशेन जननीयत्वात्। लघुचन्द्रिकोक्तमेव पक्षान्तरं पोषयन् विशदीकृत्याह यद्वा विशिष्टान्वयइत्यादिना।

स्वयंज्योतिष्ट्वश्रुतिमूलकत्वान्न दोष इति। उक्तभेदस्य श्रौतद्वित्वान्यथानुपपत्तिमूलकत्वे परम्परया श्रुतिमूलकत्वमपि यद्यप्यापतति, तथापि तत्राभेदश्रुतिरिव स्वयंज्योतिष्ट्वे न बाधिका काचिच्छ्रुतिरितिविशेष इति भावः। तदिदमुक्तं प्रकृताया इति। श्रुत्यन्तराबाधिताया: श्रुतिमूलाया इति भावः।

मूलपृष्ठम् ६४—प्रमित्युपधायकस्य परामर्शस्येति। अत्र यद्वक्तव्यम्, तदुपक्रमे एव सद्वचनाभासलक्षणयोगित्वपदार्थनिरूपणप्रवृत्तशारदाया राजहंसे द्रष्टव्यम्।

इति खण्डनशारदायां स्वप्रकाशवादे राजहंसः।

## खण्डनशारदायामनिर्वाच्यत्वनिरुक्तौ राजहंसः।

एतत्प्रकरणसम्बद्धमुपनिबद्धमधिकमनुसन्धेयं दर्शनसर्वस्वे शून्यवादविवर्तवादयोः।

मूलपृष्ठम् ६५ चित्राद्वैतवादिनेति। सच्चिदुभयात्मकतया चित्रत्वम्।

मूलपृष्ठम् ६६ सत्तादात्म्यापन्नत्वरूपासत्त्वस्येति। अत्र तादात्म्यमाध्यासिकमलीकव्यावृत्तम्, सन् घट इतिवत्सदलीकमित्यनध्यासात्। एवं चासत्त्वमत्र मिथ्यात्वम्।

इत्यपि वदन्तीति। अद्वैतसिद्धेश्चन्द्रिकाकृतामभिप्रायेणेदं मतं स्वयमेवोक्तम्, युक्तोऽयमर्थः स्वयमेवाग्रे तत्र तत्र मूले टीकायाञ्चादरणीयो यद्यपि, तथापि सुहृद्भावेन जल्परीत्यापि [समाधानोपन्याससम्भवे नात्रातीव तदादरः कृतो वदन्तीत्युक्त्या]। खण्डनेषु जातित्वमभ्युपेत्य समाधानं तु नैवोचितमित्याह इदन्तु बोध्यमित्यादिना

महाविद्यानुमानेष्विति। महाविद्याविडम्बनकारो ब्रूते केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानादन्वयव्यतिरेकिसाध्यविशेषं वाद्यभिमतं साधयन् महाविद्येत्युच्यते, तस्य च महाविद्यात्वमसिद्धत्वादिसकलदोषविरहः, प्रमेयत्वादीनां निर्णीतपक्षवृत्तित्वेन पक्षधर्मत्वासिद्धेरसम्भवादित्यादि। शिवादित्यमिश्रोऽपि प्रोक्तग्रन्थ एव 'पक्षतद्भिन्नवृत्तित्वरहितत्वानुषञ्जितः। धर्मः साध्यवतः साध्यो मेयत्वात्प्रतिभासये'। इत्यभ्यधात्। अनेनैव नयेन 'वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगिवृत्तिधर्माधिकरणं मेयत्वा' दिति तत्त्वप्रदीपिकाटीकोट्टङ्कितमनुमानं योजनीयम्। पक्षे प्रकारान्तरेण साध्योपसंहारशालित्वे सति दृष्टान्ते प्रकारान्तरेण साध्योपसंहारशालित्वमिति लक्षणं तु क्षितिः सकर्तृका कार्यत्वाद्घटवदिति पक्षधर्मताबललभ्यविशेषमादाय पर्यवसायिसद्धेतुमात्रसाधारणमिति न जातिविशेषतया समर्थनीयमहाविद्यानुमानलक्षणतयाऽनुमन्तुमुचितम्।

जातित्वेनाभ्युपगतेष्विति। साध्यमिव तदभावं प्रत्यपि भणितिभङ्गीभेदेन प्रमेयत्वादेः साधकतयोपन्याससम्भवात्। तादृशप्रयोगकौशलं पुनर्महाविद्याविडम्बनपरिशीलनशिक्षणीयम्। न चानुकूलतर्कावतारदशायां जातित्वाभ्युपगमो नादरणीय इति वाच्यम्।

तथासति तर्कमूलभूतव्याप्त्यनुसारेणैवानुमानप्रयोगौचित्येनाजागलस्तनानुकारीदृशप्रयोगाणां प्रहेलिकामप्युपहसतामवहेलनाया एव रमणीयत्वादिति भावः। तत्त्वप्रदीपिकादौ तु तत्काल-प्रचलितप्रणालीमवलम्ब्य तादृशप्रयोगादरो यत्तानुरूपो बलिरिति न्यायेनैवेति द्रष्टव्यम्। एवं च त्वयेत्युक्तिः कदाचित्स्फूर्तिवैचित्र्येणानुकूलतर्कावतारेऽप्युपायस्योपायान्तरादूषकत्वं तादृशप्रयोगविशेषेणाप्यभिमतानुमानसम्भवेन जातित्वानभ्युपगन्तुरपेक्षयैवेति।

तेषामनुत्तरत्वादिति। परार्थे स्थापनाविधया प्रयुक्तानां स्थापनाहेतुप्रयोगानन्तर-प्रयोगविषयत्वरूपोत्तरत्वस्यासम्भवात्। स्वार्थस्थले तु सर्वथैव तदसम्भवादित्यर्थः। यदि स्थापनाहेतुप्रयोगानन्तरप्रयोगो वाक्यविशेषात्मैवोत्तरशब्दार्थः स्वरससिद्धो न तु तादृश-प्रयोगार्थ इति स्वीक्रियते, तदा कथं शब्दानात्मकेषु हेतुषूत्तरत्वसम्भावनापीति। अत्र पक्षे च विरोधहेत्वाभासखण्डने सर्वमसङ्ज्ञेयत्वादित्याद्यजातिजातिसाधारणस्येति पङ्क्तौ जातिशब्देन ज्ञेयत्वहेतुरेव स्थापनानन्तरं प्रयुज्यमानतादशायां न ग्राह्योऽपि तु स्थापनानन्तरं तत्प्रयोगः, 'यदा तु सर्वं सज्ज्ञेयत्वादिति स्थापनाहेतुप्रयोगानन्तरं तथा प्रयोगस्तदा तस्य जातित्वमिति' तत्र शारदावाक्ये तु तस्येत्यनेन प्रयुज्यमानस्य हेतोरिव तत्प्रयोगस्यापि परामर्श-सम्भवः।

मूलपृष्ठम् ६८ तथाच तृतीयैव कोटिरिति। घटाभावे न घटो नापि घटाभावः घटाभावे घटो नास्तीतिप्रतीतेः प्रमात्वेऽविश्वासात्, रूपभेदेनाधाराधेयभावस्य न हि दण्डी देवदत्तः कुण्डलिनं स्वमारोहतीति न्यायेनापमानितत्वात्, तथा च तृतीयैव कोटिरित्युदाहरणमिहाहरणीयम्। पूर्णाद्वैतेति। व्यवहारेऽप्यद्वैतेत्यर्थः। साम्राज्यं स्वगृहीताप्रामाण्यकम-विषयत्वमिह पर्यवस्यति। घटे घटत्वाभावस्य घटभेदस्य चापत्तिस्त्वत्र भावद्वैतशून्यतापत्ति-र्येवसन्ना।

अनुपदमेवेति। यद्यपि तत्र ब्रह्मवादिनः सङ्गिरन्त इत्येवोक्तम्। तथापि नैषधाध्ययने नात्रैवाग्रे मुमुक्षूपदेशप्रकरणनिरीक्षणेन चरमपद्ये 'यःसाक्षात्कुरुते' इत्याद्यभिधानालोचनेन च स्वस्यापि ब्रह्मवादित्वं निर्विवादमिति भावः। इति खण्डनशारदायामनिर्वाच्यनिरुक्तौ राजहंसः।

## अद्वैते प्रमाणप्रश्नखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ६६— परमतेऽप्रसिद्धतयाऽद्वैतस्याव्यवहार्यत्वेन खण्डशः प्रसिद्ध्यभिप्रायेण व्याचष्टे अद्वैते ब्रह्मपदार्थेत्यादि। लाघवं विशेष्यविशेषणभावव्यत्यासेनाद्वैतपदार्थानां साधारण्यं चानुरुध्याभिदधाति अद्वैतत्वेनाभिमत इति।

मूलपृष्ठम् ७० अनङ्गीकुर्वत इति। अङ्गीकारस्यानाहार्यनिश्चयरूपतया व्यवहर्तव्याङ्गीकारत्वेन गौरवेण व्यवहारं प्रति कारणत्वाभावाज्ज्ञानत्वावच्छिन्नजन्यस्य तस्य ज्ञानमात्रापकत्वमेवेत्याशयेनाह अप्रतीतवत इति। सन्मात्रात्मनाऽद्वैतस्यापि प्रत्यक्षविषयत्वमुपेत्य प्रत्यक्षविषयीभूतवस्त्वन्तरप्रमाणप्रश्नेऽपि खण्डनं सञ्चारयितुमाह प्रत्यक्षविषयत्वेऽपि वेति। आक्षेपानयनकथनशब्दानां पौनरुक्त्यं परिहर्तुं व्याचष्टे स्वविषयान्यथेत्यादि।

मूलपृष्ठम् ७१— अपाणिनीयमिति। 'हिनुमीना' (अष्टा० ८—४—१५) इत्यत्र 'हिनुमिनुमीना' इत्येव पाणिनिना सूत्रणीयमासीदिति तु तत्त्वम्। असक्तमिति। असन्निकृष्टमित्यर्थः। मनो न भेदादौ प्रमाणं तदसन्निकृष्टत्वात्, नाप्यन्यत्र प्रमाणसहकारित्वात् कालादिवदित्यादि भेदधिक्कार उक्तम्। असन्निकर्षः पुनः कथञ्चित्समर्थनीय इत्यन्यत्। साक्षिणैवेति। ज्ञानसुखादेः संशयाद्यविषयत्वान्यथानुपपत्त्यैव साक्षिसिद्धेः स्वप्रकाशवाद उदीरितत्वात्, स्वभावविशेषेण ज्ञानान्तरेण वा तादृशाविषयत्वोपपादनस्यापि तत्र निरस्तत्वाच्च, अज्ञानादिसाधकतयाऽपि च सिद्धेन साक्षिणैव सुखादिभानस्योपपाद्यत्वाच्चेत्याशयः।

तत्संसर्गविषयकानुमितेरिति। भेदसमानाधिकरणपक्षसाध्यसंसर्गविषयकानुमितेरित्यर्थः।

तुच्छताया एवेति। भावानामभवनमात्रं ह्यभावपदार्थः, न त्वसौ सन्, अनुभवविरोधात्, भूतले कियन्ति वस्तूनीति प्रश्ने भावानामेव गणनयोत्तरदर्शनात्, अन्यथाऽनन्ताभावानां सर्वत्र सत्तया तादृशोत्तरस्याप्रामाणिकत्वापातात्, घटाभावोऽस्तीतिप्रतीतेश्च विकल्पमात्रताया अपि सम्भवाच्च, अन्यथा घटाभावस्यापि सद्भावः, तत्सद्भावस्यापि सद्भाव इत्यनवस्थाप्रसञ्जनात्। घटादिसद्भावेऽपि तथा प्रसञ्जने तु द्वैतशून्यताया एव नमस्कार्यत्वात्, अधिकरणातिरिक्ततयाऽनुपलभ्यमानत्वेनाभावस्य घटादिभ्यो विशेषाच्च, नचाधिकरणातिरिक्तताऽपि तावदभाव एव; अधिकरणातिरिक्ततया घटाद्युपलम्भेन तस्या घटाद्यात्मकत्वात्। न चाधिकरणातिरिक्ताप्रकारकोपलम्भाभावस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्याधिकरणं तावदभाव इति नाभावापलाप इति वाच्यम्, विषयतामात्रस्य तुरीये शारदायां निरस्तत्वेन घटादिसंयोगादिवदाधाराधेयभावस्याङ्गुलिद्वयसंयोगवच्च सम्बद्धत्वमात्रस्यापि स्वरसतो ज्ञानवान् घट इति मत्वर्थव्यवहाराभावेनानियामके सम्बन्धतायाः स्वप्नमनोरथमात्रजीवातुकत्वेन च तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य शशविषाणसब्रह्मचारित्वादित्यभिप्रायः। कालीन एवेति। मूले एवकारार्थकापिशब्देन तादृशाक्षेपप्रयोज्यत्वं विश्रमे प्रतीयते, उत्तरकालीनत्वमेव वा प्रयोज्यत्वे पर्यवसाययितव्यमितिभावः।

मूलपृष्ठम् ७३— विजयोद्देश्यककथायामिति। ईदृश्यामपि कथायां न प्रश्नखण्डनेनैव प्रत्यवस्थानं नियन्त्रितम्, स्फूर्तिवैचित्र्येण खण्डनान्तराणामपि सावकाशोद्भावनत्वादिति तु विभावनीयम्। इत्यद्वैते प्रमाणप्रश्नखण्डनशारदायां राजहंसः।

## खण्डनेऽद्वैत प्रामाणिकत्वशारदायां राजहंसः।

मूलपृष्ठम् – ७३ निर्धर्मकस्यैव बोध इति। अत्राधिकमुपक्रम एव राजहंसे वस्तुतस्त्वित्यादिनोदीरितम्। दर्शनसर्वस्वेऽपि च द्रष्टव्यम्। अतिप्रसङ्गवारकत्वादिति।[1] एतावता

१ सहयत्वादित्यर्थः।

"अगृहीत्वैव सम्बन्ध" मिति प्राचां सरणिरुपपादिता। यदि तु गुणस्य द्रव्यानुपादानत्वाच्छब्द तन्मात्रादेराकाशाद्युपादानस्य द्रव्यत्वमावश्यकम्, सुतरां त्वस्मदाद्यनुभूयमानस्य स्थूलशब्दादे अव्यापकत्वेन च मूर्तत्वमपि, अतएव कठोरध्वनिना बाधिर्यमपि कदाचिज्जायते, एवं वेगविशेषवशात्कर्णरन्ध्रद्वाराऽप्रतिरुद्धस्त्वाभावतयाऽन्तःप्रविश्य मानसमाहन्ति शब्दः, चैवं शब्दविशेषश्रावणप्रत्यक्षमेव तादृशस्थले आद्यं जागरणम्, न तु तदीयवृत्तिज्ञा तदधीनोपस्थितिर्वा शाब्दबोधो वा, द्वितीयादिक्षणेषु त्वेतेषां सद्भावो भवतु, मा वा, तेन, अतएव शङ्खमृदङ्गादिध्वनिनापि भवत्येवोत्थानम्, तदीयश्रावणप्रत्यक्षस्य तद सम्भवात्, शक्तिग्रहादेश्चोत्थानेऽनुपयोगात्। एवं च वृत्तिज्ञानं विनैव शाब्दबोधस्य नेदम घं जागरणमुदाहरणम्। तार्किकमतेऽपि जीवस्याचैतन्यदशायामकर्तृत्वेन जागरण शब्दायत्तमन्यादृशं वाऽदृष्टद्वारा भगवतैव जीवे आधेयमिति नोपयोगो वृत्तिज्ञानानधी शाब्दबोधस्येति निगद्यते, ब्रह्मणि वेदान्तशब्दश्रवणमात्रेण च न स्थितिः, अपि त्वर्थज्ञान द्वारैव, अन्यथा मन्त्रविशेषादिव विषादिनिवृत्तिराचार्यप्रयुक्ताद् वाक्यविशेषादज्ञाननिवृत्ति स्वीकृता स्यादिति वेदान्ततात्पर्यावधारणात्मकश्रवणस्य वैयर्थ्यप्रसङ्गः, यद्यपि क्वचि यमिष्ट एव, पुरुषधौरेयविमर्शविशेषेणाज्ञाननिवृत्तिर्हि सुचरितपरिपाके कस्याचित्सम्भवत्ये वरप्रदानेषु तथा दर्शनात्, तथापि नाज्ञातार्थवागमं विना, न च रीतिरियं सर्वत्रेति यद्युच्यते, तदा बोधस्येव तन्नियामकः शब्दस्यापि कश्चिदनिर्वचनीयः सम्बन्धो ब्रह्मणा गस्यमान उचितश्च कास्ति। यदि तूदाहरणानादरेण विशिष्य ब्रह्मण्येव सम्बन्धं विना शब्दे बोध आधीयत इत्युच्येत, तदा ब्रह्मणि ज्ञानाज्ञानयोरपि न कश्चित्सम्बन्धः स्वीकर्तुमुचि इति गताऽपरोक्षतां सकलापि वेदान्तप्रक्रिया। अथ प्रतिपत्तिद्वारक एव शब्दस्य ब्रह्म सम्बन्धः, तदासौ ब्रह्मविषयकप्रतिपत्तिजनकत्वमुपधायकत्वरूपं योग्यतारूपं वा स्यात्, नाद्य प्रतिपत्तेः पुरा तदसम्भवात्, तस्या एवोपपादनस्य विचारास्पदत्वात्, न द्वितीयः, ब्रह्मविषयक प्रतिपत्तियोग्यता ब्रह्मादिशब्दे एव, न तु घटादिशब्दे इत्यत्र नियामकस्य गवेषणीयत्वात् स्वभाव एवासाविति चेदसावेव शक्त्यादिशब्दैः परैरुच्यत इत्यलमतिवेलं प्रच्छादनेन वस्तुतस्तु घटविषयकप्रतिपत्तियोग्यता कुतो घटादिशब्दे इत्यत्र घटादौ घटादिशब्दशक्ति वशादित्युक्तौ शक्तावपि तथाजिज्ञासायामन्ततःस्वभावविशेषस्यैव शरणीकरणीयतया प्रथममपि घटादौ घटादिशब्दसम्बन्धस्वीकारेणेति सर्वत्रैव शब्दार्थयोः सम्बन्धवि निरङ्कुशं निर्धर्मकं ब्रह्मावगम्यतां श्रुत्या, फलबलेनैव तादृशस्वभावस्य वक्तव्यत्वादतिप्रसङ्ग नवकाशात्, न चाग्न्यादौ ज्वलनस्वभावस्येवास्यापि स्वरूपसत एव कार्यकारित्वे कृतं को व्याकरणादिनेति शङ्कनीयम्, स्वभावोऽपि कश्चिदज्ञातः कश्चिच्च ज्ञातःकार्यं कुरुत इ स्वीकारसम्भवात्। यदि च स्वभावविशेषोऽपि स्वीकार्य एव हठादापतन्, तत्सिद्धः शक्ति विशेषोऽपि नावहेलनीयः, स एव च व्याकरणादिनाऽवगम्यत इतीदृश्येव वासना स तदाऽपि प्रागुक्तमेवेति।

स्वरूपासिद्धश्चेति। हेतुस्वरूपस्य पक्षेऽन्यत्र चाप्रमितेरित्यर्थः। ब्रह्म य निर्धर्मकं स्याच्छक्यं लक्ष्यं वा न स्यादिति तर्के तु पक्षे निर्धर्मकत्वासिद्धिर्न दोषः, तत्र पादकारोपमात्रेण प्रवृत्तेः, आपादकस्य क्वचिदपि प्रसिद्ध्यभावस्तु तत्रापि दोष एव, त्यनवगमात्, विपर्ययानुमितौ च धर्मिग्राहकमानबाधोऽपि, श्रुत्या निर्धर्मकत्वेनैव ब्रह्मप्रमिते

अलीकमेव तादृशमिति । तथा च न व्याप्त्यग्रह इति तर्केऽनुमाने च साधारणम्, ब्रह्मापि च भवत्वलीकं निर्धर्मकं यदि,तेनानुमानपक्षे पक्षधर्मताविरहोऽपि न दोषः। 'नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः । गगनाम्भोजवत्सर्वमन्यथा युगपद्भवेत्' (तत्त्वसंग्रहे) इति सौगतानुमानवदसत्ख्यात्या प्रकृते ब्रह्मणोऽलीकस्यापि पक्षता स्यादिति भावः। असम्भवादिति । असत्ख्यातेरप्रमात्वेन पक्षविशेष्यकसाध्यप्रकारिका प्रमा न सम्भवति,। सदसदुपरागासम्भवेन चासत्ख्यातिरश्लाघनीयैवेति भावः।

मूलपृष्ठम् ७४— समभिव्याहाराभावसहकृतत्वेनेति । सहकारितायां योग्यतातात्पर्यज्ञाने अप्युपलक्षणीये । लक्षणयैव निर्वाहसम्भवादिति । एतेन भाट्टाभिमताभिहितान्वयवादाऽऽसूत्रणम्, तन्मतेऽभिधानं पदजन्यानुभवः पदार्थमात्रविषयको न तु तार्किकाणामिव पदार्थस्मृतिः, हस्तिहस्तिपकादाविव स्मृतिप्रयोजकस्य मूलसम्बन्धस्यानङ्गीकारात्, स्मृतिसमं ज्ञानान्तरं वाऽभिधानम्, नहि तस्य स्मृतित्वम्, उक्तहेतोः, तत्तोल्लेखविरहाच्च, नाप्यनुभवत्वम्, अज्ञातविषयकत्वाभावात्, एवं च प्रमाणबलात्स्मृत्यनुभवातिरिक्तं ज्ञानमुपेतव्यम्। अन्वयविनिर्मुक्तपदार्थानामुक्ताभिधानविषयाणां लक्षणयाऽन्विततया तु शाब्दी मतिः। प्राभाकरमते तु स्वरूपसत्येवोपयुज्यमाना कुब्जशक्तिरुच्यतेऽन्वयांशे, अभिधानं चान्वयानुभवजननसामर्थ्यं शक्तिरेव, पदार्थोपस्थितिस्तु स्मृतिरूपा, उक्तसामर्थ्यस्यैव मूलसम्बन्धतया स्मृतौ बाधकाभावात्, विलक्षणज्ञानकल्पनापेक्षया तत्ताप्रमोषकल्पनाया एवौचित्यात्। कार्यान्विते शक्तिरिति तु प्राचीनप्राभाकरमतमिति। वेदान्तिषु तु तत्त्वप्रदीपिकाकृदादीनामभिहितान्वयवादो भद्रकरोऽभात्। अद्वैतसिद्धिकृदादयस्तु वेदान्तप्रक्रियाया अभिहितान्वयवादे इव नव्यप्राभाकरीयान्विताभिधानवादेऽपि निर्वाहसम्भवेन न कश्चिदपि पक्षे आग्रहिलतामाललम्बिरे, निर्विकल्पबोधस्थलेषु लक्षणयाऽन्वयविनिर्मुक्तप्रथोपपत्तेः। सत्यादिपदस्थले विशिष्टघटकतया विशेष्यस्य शक्यस्यैव शाब्दबोधोद्भवेन च लाक्षणिकं नानुभावकमित्यस्याप्रतिकूलत्वात्, शक्याघटके लाक्षणिकस्यैवाननुभावकत्वात्, तात्पर्यगोचरांशत्यागे लक्षणाव्यवहारस्य त्याज्यत्वाद्वा। तार्किकाणां तु नाद्यपक्षे प्रवेशः, शक्तिरूपमूलसम्बन्धेन प्रथमं पदार्थस्मृतेरेवोपगमात्, नापि द्वितीये, अन्वयांशेऽन्यलभ्ये शक्तौ मानाभावादिति तृतीयैव सरणिः। अभिधानपदेन स्मृतिमात्रविवक्षयाऽऽकाङ्क्षया चान्वयलाभमलोच्य तु तार्किकाणामभिहितान्वयवादिता स्वातन्त्र्येण परमुच्येत, न तु भाट्टमतप्रसिद्धिमाश्रित्य। वस्तुतस्तु पदजन्योऽनुभवो वा स्मृतिसमो बोधो वा न पदेषु सामर्थ्यविशेषमस्वीकृत्य शक्योपपादः स च निरस्तः शब्दखण्डनशारदायाम्, अत एवान्विताभिधानवादोऽपि न युज्यते, तार्किकसम्मतशक्तिरपि तत्र निराकृतैवेति प्रक्रियामात्रमापातत एवेदं रुचिवैचित्र्येण केनचित्परमाद्रियेत।

दूरस्थत्वेनेति । तादृशश्रुतिप्रतिपाद्यस्याव्यभिचरितक्रतुसम्बन्धाभावमप्युपलक्षयत्येतत्, अन्यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति विहितपलाशात्मकपर्णमयतावत् क्रत्वङ्गत्वं दूरस्थस्यापि सम्भाव्येत, अतएव 'न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनमधिकृत्य व्याकरणाधिकरणे 'अप्रकरणगतत्वेनानैकान्तिकक्रतुसम्बन्धासम्भवाच्च नाञ्जनवादिरस्तु ववाक्यादिफलश्रुतिवदर्थवादत्व'मिति भट्टैरप्युररीकृतम्।

मूलपृष्ठम् ७५—स्वार्थपराणामेवेति। अत्र व्याकरणाधिकरणे 'न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं न प्रमेयस्वरूपज्ञापनार्थेनेत्येतदीश्वराज्ञासिद्धम्, नहि 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इत्यादिशास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते। अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति काचित्परिभाषा, तथाप्येवंविधाः साधुशब्दाः प्रत्येतव्या इतीदृशो विधिः सम्भवत्येवे'ति भट्टपादोक्तमप्यनुसन्धेयम्। अत्र परिभाषापदोपादानेन क्रियामात्रपरत्वपक्षस्योपहासास्पदत्वं व्यज्यते। वक्तव्यत्वादित्यर्थलाभे क्लेशमसहमान आह अथवेति। च्व्यन्तता तु नात्रापि त्यक्तव्या। इति खण्डनेऽद्वैतप्रामाणिकत्वशारदायां राजहंसः।

## खण्डने प्रत्यक्षबाधोद्धारशारदायां राजहंसः।

मूलपृष्ठम् ७५— स्वयं मण्डनवाचस्पतिश्रीहर्षेति त्रयमनुसरन्नाह परे त्विति

मूलपृष्ठम् ७६—व्युत्पादनीयमिति। इदं शारदां मनसि निधाय न तु टीकान्तरम्। मानसज्ञानविषय इति। बहिरिन्द्रियाजन्यज्ञानमात्रमिह ग्राह्यम्, न तु मानसप्रत्यक्षमात्रम्। चाक्षुषादिज्ञानस्य परकीयस्यापि नयनोन्मीलनादिदर्शनेनोन्नयनसम्भवाद्बहिरिन्द्रियाजन्येति।

मूलपृष्ठम् ७७—स्वज्ञानत्वेतराविषयकत्वनियतमिति। नियतत्वं नात्र व्याप्तत्वं ग्राह्यम्। स्वप्रकाशे घटादेरपि भानेन व्यभिचारात्, किन्तु प्रयोजकत्वम्। तथा च स्वज्ञानत्वेतरविषयकत्वं प्रति स्वप्रकाशत्वमप्रयोजकमिति तात्पर्यम्।

तदितराविषयकत्वादिति। स्वप्रकाशत्वबलादित्यादिः प्रकृतत्वलभ्यः। तथा च तदितरविषयकत्वं स्वप्रकाशत्वप्रयुक्तं न भवतीत्युक्त एव तात्पर्यार्थः सम्पद्यते। एवं च ज्ञाने स्वज्ञानत्वेतराहमर्थघटादिभानेऽपि न क्षतिरिति प्रोक्तमेव।

मूलपृष्ठम् ७६—प्रागनुपस्थितेस्त्विति। इदमुपस्थितिसामग्रीविरहस्याप्युपलक्षणम्, तेन विशेषणज्ञानजनकानामेव विशिष्टबुद्धौ विशेषणविषयकत्वनियामकत्वोपगमेऽपि न क्षतिः, अतएवाग्रे स्वयमेव प्रतियोग्यादिज्ञानसामग्र्यपि पृथगुपात्ता। एकत्रानुपपत्तेरिति। भेदबुद्धौ प्रतियोग्यादिबुद्धित्वसत्त्वेऽपि स्वातन्त्र्येण प्रतियोग्यादिबुद्धित्वं कारणतावच्छेदकमिति मतेनेदम्, तथानुपगमेऽपि कार्यकारणधियोर्भेदस्यावश्यकत्वात् प्रकृते न काचित्क्षतिः।

प्रामाण्यस्योत्पन्नत्वेनेति। अतएव प्रामाण्यानुत्पत्तिरूपः सङ्कोचोऽपि न प्रसज्यते, 'अबाधात्तु प्रमामत्रे' त्यादिवक्ष्यमाणत्वात्।

मूलपृष्ठम् ८०—अभेदप्रतीतावपीति। प्रमात्वं सन्दिग्धमेवेत्यन्वयः।

मूलपृष्ठम् ८१—आत्मपरा परेति। अद्वैतात्मपरतयैव श्रुतिः काचित्परा। चतुष्टयवाद इति। सम्बन्धस्य पार्थक्यविवक्षायां तु पञ्चकवादः।

मूलपृष्ठम् ८२—दुर्वचश्च शरीरशरीरिभाव इति। इदं दर्शनसर्वस्वे प्रपञ्चितम्।

क्षणिकत्वादिति। क्षणिकत्वमत्र क्षणद्वयसाधारणम्, घटविषयकतयोत्पन्नमतेः किञ्चिद्विरम्य पटादिविषयकत्वोपगमे क्षणद्वयवृत्तित्वस्यापि भङ्गो भवत्येव। न च पटादिवि-

प्रयकत्वनियामकस्याद्यक्षणे उपनिपाते द्वितीयक्षणे पटादिविषयकत्वमास्तामिति वाच्यम्, करणव्यापारभेदे क्रियाभेदस्यावश्यकत्वेन सन्निकर्षादिरूपतादृशनियामकस्य ज्ञानान्तरोत्पादकताया एवौचित्यात्। अन्यथा त्रिचतुरादिक्षणस्थायित्वस्यापि ज्ञाने स्वीकारप्रसङ्गात्। एतेन विषयान्तरविषयकज्ञानानुदयपर्यन्तमेकमेव ज्ञानं धारावहनस्थल इति मतमनादेयम्, तावत्पर्यन्तं स्थितस्यापि ज्ञानस्य पश्चात् पटादिविषयकत्वप्रसङ्गात्, नहि पश्चात् करणव्यापारान्तरोद्गमः पूर्वं तु तावत्पर्यन्तमैक्यमेव करणव्यापारस्येति वक्तुं शक्यम्, धारावहनदशायामपि नेत्रस्पन्दस्यानुभविकत्वात्। त्राटकस्थले परं नेत्रव्यापारैक्यं सम्भाव्येत, विषयान्तरे तु तत्रापि व्यापारान्तरम्, परन्तु तत्रापि चेतसि चपलतां पालयति ज्ञाननानात्वं न त्याज्यम्.तस्मिन्नेकाग्रतां गते तु तत्र ज्ञानैक्यं वा तत्प्रवाहो वेत्यत्र माध्यस्थ्यमेवोचितम्, अन्यत्र ज्ञानस्वाभाव्यस्य क्षणद्वयस्थितावेव निर्णये तु क्लृप्तकल्पनादरादत्रापि ज्ञाननानात्वं रोचयन्ते केचित्, विरम्य व्यापाराभावस्तूभयत्रापि पक्षे समान एव, उत्तरोत्तरविषयितावेलायां पूर्वपूर्वविषयिता ह्यतएव नानुवर्तमानाऽनुभूयते। प्रथमावगाहने हि कारणविशेषजन्यत्वस्य नियमकत्वे द्वितीयावगाहनेऽपि तत्तत्कारणजन्यतातिरिक्तं नियामकं नोचितम्, अन्यथा पूर्वमपि तादृशजन्यताया नियामकत्वस्यानुपगमनीयत्वेन ज्ञाने नित्यत्वसर्वविषयकत्वयोः प्रसक्तिर्दुर्निवारैव स्यात्, 'चलं हि गुणवृत्तम्' 'सर्वे क्षणपरिणामिनो भावा ऋते चितिशक्तेः' इति नयः परमेकक्षणवृत्तित्वे एवानुकूलः। ज्ञानं यावत्तिष्ठति तावानेव कालः क्षण इति मते तु विरम्य व्यापाराभावःसुस्पष्ट एव, अभेद्यकालस्यैव क्षणत्वात्, स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वादिरूपतल्लक्षणानां तावत्येव समये समन्वेतव्यत्वात्। क्षणस्यातिरिक्तपदार्थतापक्षेऽपि तथैवोचितम्। न च पूर्ववर्तिविभुविशेषगुणानामुत्तरवर्तिविभुविशेषगुणनाश्यतया ज्ञानस्य क्षणद्वयसंस्पर्शिता प्रसक्तैव, ज्ञानस्य मनःपरिणामतामतेऽप्यनुभववैषम्यायोगेनेत्थमेव कल्पना रमणीयेति साम्प्रतम्, अन्तिमशब्दे मुक्त्यव्यवहितप्राक्क्षणवर्तिज्ञाने च व्यभिचारात्तादृशनियमस्याप्रयोजकत्वात्।

मूलपृष्ठम् ८३— **ज्ञानविशिष्टज्ञानान्यत्वाभिप्रायेणेति।** यद्यपि व्यवहारदशायां ज्ञानविशिष्टत्वमेवोक्तसम्बन्धाख्यां ज्ञानानामायाति, सुषुप्तिमरणादिव्यवधानेऽपि ज्ञानपूर्ववृत्तित्वाच्चतेः। तथापि मुक्त्यव्यवहितप्राग्वर्तिज्ञाने एव तादृशान्यत्वप्रसिद्ध्या श्रुतेरन्ततस्तत्रैव सावकाशता दुर्वारा। स्वाव्यवहितपूर्ववृत्तित्वस्य द्वितीयसम्बन्धत्वे स्वविषयत्वस्य वा तृतीयसम्बन्धस्य निवेशे त्विदानीमपि तादृशान्यत्वस्य ज्ञानेषु प्रसिद्धिसम्भव इति भावः।

**गौरवसम्भावनाया इति।** यद्यप्यनुमितित्वेन विशिष्टपरामर्शत्वेन च कार्यकारणभावनिर्णयं विना 'वह्निव्याप्यो धूमः' 'धूमवान् पर्वत' इति ज्ञानद्वयसम्प्रतिपत्तिस्थले विशिष्टपरामर्शस्य निर्णयासम्भवेन गौरवनिर्णयो न सम्भवति, तथापि तादृशस्थलेऽपि विशिष्टपरामर्शस्य कल्पनाप्रसङ्गेन गौरवसाम्भावनाऽस्तीति सा कथितसामान्यकार्यकारणभावनिर्णयं प्रतिबध्नीयादितिभावः।

मूलपृष्ठम् ८४—**विलोपापातादिति।** दण्डादिरूपकारणस्य कार्यपूर्वमसम्प्रतिपत्तिस्थलेऽपि कल्पनीयताप्रसक्त्या सामान्यकार्यकारणभाववादिनो गौरवं सम्भाव्यत इत्युक्तरीत्यैव द्रष्टव्यम्, न तु तस्य निश्चयः, सामान्यकार्यकारणभावनिर्णयं विनोक्तस्थले

कारणनिश्चयस्यासम्भवात्, तन्निश्चये तु गौरवनिश्चयस्याकिञ्चित्करतैव, सामान्यकार्यकारण-भावनिश्चयस्य सम्पन्नत्वात्।

किञ्चनपदेनैवेति। किंपदस्य सर्वनामतया विशिष्य तत्तदर्थसमर्पकत्वेऽपि नञ्-शब्दसमभिव्याहारेण किमपि नास्तीत्यादाविव प्रकृते निखिलप्रतियोगिकाभावबोध एवेत्या-नुभविकः पन्था न त्याज्यः; निखिलप्रतियोगिकत्वं च विशेषधर्मावच्छिन्नाभावकूटेष्विह प्रती-तेषु वाऽनुगतधर्मावच्छिन्नप्रतियोगिताकेऽभावे वेति त्वन्यदिति भावः।

मदीयशङ्कायामिवेति। क्वचिद्व्यभिचारशङ्कायास्तर्केण निरासे तन्मूलभूतव्याप्ता-वपि व्यभिचारशङ्कायामनवस्था।

मूलपृष्ठम् ८५—लिङ्गोपहितलैङ्गिकभानस्याप्रामाणिकत्वे त्विति। व्याप्तिपद-सामानाधिकरण्ये कालभानेनैव धूमकालिकवह्निभानसम्भवात्। न च धूमालोकादितत्तल्लिङ्ग-कपरामर्शानां व्यभिचारवारणायाव्यवहितोत्तरत्वघटितकार्यकारणभावाकल्पनेन लाघवो-ऽनुमानम्, तस्य तर्कतया प्रमाणसहकारित्वसम्भवेऽपि स्वयमप्रमाणत्वात्, तदनुग्राहक-प्रमाणस्य च लिङ्गोपहितलिङ्गिभानेऽभावादितिभावः। ननु व्याप्तिधीरपि सामानाधिकरण्य-सम्बन्धावच्छिन्नप्रतियोगिताकं साध्याभावस्याभावमवगाहमानेह विवक्षणीयेत्यरुचेरा-ह किञ्चेति। व्याप्तिव्यापकत्वयोरतीन्द्रियत्वेनेति। इदमुपपादितमनुमानखण्डनशारदायाम्। शब्देन क्वचित्तयोर्ग्रहमादत्याह प्राय इति। तत्सामग्रीसत्त्वादिति। विशिष्टवैशिष्ट्या-वगाहिपरामर्शस्यासम्पत्तिस्तु न कामपि हानिमानयति, तस्यैव कारणतेतिमतस्यानुमा-मानभङ्गे भग्नीकृतत्वात्।

विशिष्टबुद्धेस्तत्रावश्यकत्वादिति। बाधनिश्चयोत्पत्तिकाले विशिष्टबुद्धिकारण-तत्सामग्र्या अपि प्रतिबन्धकत्वमावश्यकमिति तु न वाच्यम्, बाधनिश्चयाभावस्य कार्यस-वर्तितया कारणत्वकल्पनसम्भवात्। न चैवं सिद्ध्यभावस्याप्यनुमितौ तथैव हेतुता स्यादि-विनाऽनुमित्सामनुमिति नं कदापि स्यादनुमितिरूपसिद्धेः सत्त्वादिति वाच्यम्, प्रतिब-न्धकभावानुगमाभावेनैकत्रैवमित्यन्यत्रापि तथा स्यादित्यस्यावाच्यत्वात्, सिद्धेः प्र-तिबन्धकताया अनुमानापमानशारदायामुक्तत्वाच्च।

मूलपृष्ठम् ८६—पक्षेऽनन्तर्भावयितुमिति। एवं च नेयमनुमितिः सर्वपदोपादा-नेऽप्यवच्छेदकावच्छेदेन, सर्वपदं तु दृष्टान्तबुद्धिभिन्नयावद्बुद्धिलाभायेतिभावः।

अभेदांशेऽगृहीताप्रामाण्यकेति। एकानुमिते 'विषयो विषयिभिन्नत्वाभाववान्' इतिमितिसमानाकारत्वाभावात्।

मूलपृष्ठम् ८८—घटितसमाहार्यत्वमिति। स्वप्रकारकत्वं विशेष्यदलम्। विषयिता-सम्बन्धावच्छिन्नेति। किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानिरूपितनिरूपकता-पर्यायप्रकारितासम्बन्धावच्छिन्नेत्यर्थः।

विषयव्यवस्थितिविधाने इति। अद्वैतश्रुतेः प्रातिभासिकं प्रामाण्यं चेदप्रामा-

प्रसङ्गः, व्यावहारिकं चेत्तदा व्यवहारेऽप्यद्वैतप्रसङ्गः, तस्मात्पारमार्थिकाद्वैतविषयकत्वेनैव तस्याः प्रामाण्यम्, द्वैतप्रमाणानां तु व्यावहारिकद्वैतविषयकत्वेन तत्सम्भवतीत्युक्तं प्राक्।

मूलपृष्ठम् ८९—तत्तत्पदार्थविषयकत्वेनेति। जनकस्येव जनकतावच्छेदकस्यापि भ्रमस्थलसाधारणतोचितेत्याशयः।

**निरुक्तप्रतिसन्धानविषयत्वस्यैवेति।** आपादकस्यात्माश्रयादित्वाभिप्रायेणेदम्। प्रसङ्गस्य सङ्ग्राह्यत्वे तु तादृशप्रतिसन्धानस्यैव विषयतातादात्म्यान्यतरसम्बन्धेन तर्कताव्यवहारप्रयोजकत्वं मन्तव्यम्।

**तद्घटितलक्षणस्याप्यसम्भवादिति।** व्यञ्जकसद्भावे तेनैव निर्वाहेण किं जात्या, तदभावे तु व्यापकं विना न व्याप्यमिति कथं जातिसद्भावोऽनुमन्येत। यदि तु व्यञ्जकस्यानुगमे एव तेन जातेरन्यथासिद्धिर्नत्वननुगमे, न चास्ति तदनुगम इति कथं व्यङ्ग्यान्यथासिद्धिरित्युच्येत, तदापि नानुगतधर्ममात्रस्य सिद्धिसम्भव इति प्रत्यक्षखण्डनशारदायामावेदितम्। **मूलकर्त्राशय इति।** ईदृशस्थलेषु स्वाशये एव मूलकारीयत्वारोपः। अथवा मूलकारस्येदृशश्चेदाशयस्तदा समीचीनोऽन्यथा त्वसमीचीन इत्यर्थः। यद्वा मूलकर्त्राशयसमर्थनानुकूलोऽस्मदीय आशय इत्यर्थः। एवमन्यत्रापि विचारोपबृंहणपरे ग्रन्थे द्रष्टव्यम्।

मूलपृष्ठम् ९०—प्रमाविशिष्टेनापीति। प्रमापदं प्रमात्वेनाभिमतपरम्। प्रमाणेन= प्रमाणत्वेनाभिमतेन। एवं चानौचित्यबाधिते वस्तुतः प्रमाणत्वस्य तत्फले च प्रमात्वस्यासम्भवेऽपि न क्षतिः। **सम्भवत्येवेति।** कथयेत्यनेन चेदं सूचितमित्यादिना प्रागुदितदोषसद्भावेऽप्यद्वैतबुद्धिसन्तर्भाव्यानुपदोपवर्णितव्यभिचाराभावमात्रेणेदं द्रष्टव्यम्।

**साध्यवद्धेतोरप्यसिद्धत्वग्रहेणेति।** न च हेतुसाध्ययोरविशेषग्रहे हेतुसिद्ध्या साध्यस्यापि सिद्धिः किमिति नोक्तेति वाच्यम्, पक्षहेत्वोरप्यभेदग्रहेण हेतोरपि पक्षेऽसिद्धेरित्याशयात्। इदं चाग्रे 'असिद्ध्यादि' रितिप्रतीकव्याख्याने सूचितम्।

मूलपृष्ठम् ९२—सत्त्वव्यापकतावच्छेदकेत्यादि। अनुयोगिताविशेषो मिथ्यात्वघटकमत्यन्ताभावत्वम्। यावत्सन्निष्ठात्यन्ताभावप्रतियोगित्वरूपप्रसिद्धमिथ्यात्वं हि मनसिकृत्यैवं परिष्कृतम्।

मूलपृष्ठम् ९३—धीरेवेति। न तु तत्करणम्। तत्करणस्यापि तद्द्वारैव बाधकताव्यवहारात्।

**नोपलभ्यत इतिभाव इति।** न च केवलाधिकरणस्यैवाभावरूपताया वक्तव्यत्वेन कैवल्यस्यातिरेकानतिरेकाभ्यां दोष इति देश्यम्, प्रतियोगिशून्यत्वप्रकारकप्रतीतिविषयत्वस्यैव कैवल्यरूपत्वात्, अभावानतिरेकेऽप्यभावत्वधर्मस्यातिरिक्तस्यातिरस्कारात्। **प्रमात्वरक्षार्थमिति।** न चाभावस्यानतिरिक्तत्वेऽप्यभावत्वमतिरिच्यताम्, वर्ततां च भावे, तावतैव च तत्प्रकारकप्रतीतेः प्रमात्वमिति किमित्यतिरिक्ताभावाभ्युपगम इति वाच्यम्, एवं सत्यभावत्वविशिष्टस्याप्यतिरिक्तताया औचित्योपनीतत्वात्, अन्यथाऽभावत्वातिरिक्तोक्तेः

परिभाषामात्रत्वात्। अनन्ताधिकरणेष्वभावत्वसंसर्गकल्पनापेक्षयाऽतिरिक्ताभावकल्पनाया एवार्चनीयत्वाच्च। अत एव विरुद्धधर्माध्यासेन वस्तुभेदापादनमपि सुन्दरम्।

प्रमात्वसम्भवादिति। न चात्रापि भेदत्वविशिष्टस्यातिरिक्ततापर्यवसानमितिवाच्यम्, भेदाभेदाभ्युपगमसम्भवात्। एवं च प्रथमोऽत्यन्ताभेदस्य पक्षः, द्वितीयोऽत्यन्तभेदस्य तृतीयस्तु भेदाभेदस्येति।

घटाद्यभिन्नत्वे सतीति। घटादिपदमनुयोगिपरम्।

मूलपृष्ठम् ६४—घटपटाद्यभेदस्य ब्रह्मात्मकत्वमिति। एतच्च समन्वयसूत्रभाष्ये 'अभेदोपादानैव भेदकल्पने' ति वाचोयुक्त्या सूचितम्। प्रपञ्चितं चैतद्दर्शनसर्वस्वे।

मूलपृष्ठम् ६५—घटे पटाभेद इति। व्युत्पत्त्यनुसारिणी हि भेदस्येवाभेदस्यापि स्यान्मतिरुक्तरीत्या व्युत्पादिते जने, एवं प्रतियोग्यनुयोगिभावादेः स्वभावसम्बन्धमात्रस्याभेदे पर्यवासानस्यानुपदमुपपादनीयस्यानुशीलनोल्लसितया मत्याऽपि पटघटयोरभेदः समर्पणीय इति भावः।

भेदभानस्यापि स्वीकाराच्चेति। न चैवमाहार्यतया घटो न पट इत्यादिधियामिच्छाघटितसामग्रीमन्तरानुत्पत्तिरापद्येतेति वाच्यम्, सामानाधिकरण्यप्रतीतिप्रयोजकतया भेदे भेदभानं हि तावन्नाहार्यत्वप्रसञ्जकम्, भेदसामानाधिकरण्योपलक्षिताभेदभाने भेदाधिकरणताया अनवच्छिन्नाया एव भानोपगमात्, समानधर्मावच्छेदेन विरुद्धधर्मद्वयभानस्यैव चाहार्यत्वापादकत्वात्। भेदे मिथ्यात्वं प्रतीतवतस्तु विरोधप्रतिसन्धानस्यैवाभावेन नाहार्यत्वशङ्कापि। अतएव समानविभक्त्यन्तत्वमहिम्नाऽभेदस्य नञ्समभिव्याहारमहिम्ना च भेदस्य भानेऽप्याहार्यत्वं न प्रसञ्जनीयम्, न च तयोर्विरोधप्रतिसन्धायिन इच्छां विना तथा बोधानुपपत्तिः; बाधबुद्धेर्विशिष्टबुद्धिप्रतिबन्धकत्वे ह्युत्तेजकविधया स्यादिच्छापेक्षा सामग्रीद्वयवशाद्बोधद्वयोत्पत्तौ यत्र दोषघटितसामग्रीजत्वग्रहस्तत्राप्रामाण्यभानमात्रं न तु बोधोद्भवप्रतिबन्ध इति रमणीयमतानुमतौ तु कथमिच्छापेक्षा स्यात्। अप्रामाण्यग्रहः परं द्वैताभिनिवेशिनोऽभेदविषयकत्वावच्छेदेन, पवित्रितचेतसस्तु सर्वत्र परिपूर्णं ब्रह्मैव पश्यतो भेदविषयकत्वावच्छेदेनेति भावः। अद्वैतरत्नरक्षणकारेक्षितं पक्षं पुष्टीकुर्वन्नाह केचित्त्विति।

तस्य प्रमात्वेऽपीति। सर्वाभेदस्याद्वैतपदार्थत्वपक्षेऽपीदमर्थरजतादेर्मिथ्यात्वेन तद्भेदविषयकज्ञानस्य केवलब्रह्मात्मकाभेदविषयकत्वावच्छेदेनैव प्रमात्वम्, नतु विशिष्टविषयकत्वावच्छेदेनेति तु द्रष्टव्यम्। अत्राध्याहारापेक्षामुदीक्ष्य प्रकर्षसूचना नादृता व्याकुर्वद्भिरित्युक्त्या। तत्र यद्यपि रजतमिदमित्यस्योक्तरीत्या प्राबल्यमाशङ्क्याधिष्ठानज्ञानस्यैव तदपेक्षस्य तद्बाधकत्वं नतु रजतान्योन्याभावज्ञानस्येति समाहितम्, तथापि शुक्तिरजतयोर्भेदमगृहीतवत इयं शुक्तिरितिज्ञानेऽपि रजतमिदमिति बुद्धेः सम्भवन्त्या नेदं रजतमिति धिया बाधनीयत्वात्, अन्यादृशपुरुषमपेक्ष्यापि व्यवहारदशायां नेदं रजतमित्यपेक्षया रजतमिदमित्यस्य दौर्बल्यमवश्यं समर्थनीयमिति न्यूनत्वाच्चेति मत्या तादृशसमाधानं नादृतम्।

मूलपृष्ठम् ६७—यो यदभेदेनेत्यादि। घटो द्रव्यमित्यादौ द्रव्यपदोपात्तो घटो घटाभेदेन प्रतीयमानस्य विभक्त्यर्थस्याभेदस्य घटानतिरिक्तस्य निरूपक इति द्रव्यपदोपात्ते घ

घटपदोपात्तघटस्याभेदो दृष्ट इति भावः। ननु प्रतीयमाननिरूपक इत्यत्र निरूपकता संसर्गविधया विवक्षणीया, पटनिरूपितं प्रतियोगित्वमित्यत्र तु प्रतियोगितानिरूपकता न तादृशीत्याशङ्क्याभ्युपेत्यवादेनाह अनुपदं वक्ष्यमाणेत्यादि। संसर्गप्रकारयोरीदृशं वैलक्षण्यं शिक्षाजनितवासनामात्रजीवितं ननु स्वारसिकानुभवमानितमिति रीत्या तु शक्यतेऽत्र प्रत्यवस्थातुम्, अत एवाग्रे पुनरपीदृशस्थले व्याप्तिरियमाहूता। घटो न पट इत्यत्र तु निरूपकतायाः संसर्गतया विवक्षणेऽपि भातुं प्रभवत्यभेद इत्युक्तमेव।

सम्बन्ध्यन्तरविशिष्टसम्बन्धस्य यत्स्वभावत्वं सम्बन्ध्यन्तरस्यापि विशेषणतया तत्स्वभावत्वमितिस्वरसतः प्रतीयमानोऽप्यर्थः सम्बन्ध्यन्तरस्य परिचायकत्वोपगमे न सङ्गच्छत इत्यतोऽन्यथा व्याचष्टे—

मूलपृष्ठम् ९८—अयम्भाव इति। भ्रान्तिरित्यर्थ इति। इदमुपलक्षणम्, अन्यस्मिन्नपि धर्मिणि धर्मस्य भिन्नाभिन्नत्वविकल्प इत्यर्थस्यापि सम्भवात्।

मूलपृष्ठम् ९९—वस्तुतो व्यधिकरणयो धर्मयोरुक्तभाननियामकत्वे घटो द्रव्यं नेति प्रतीत्यापत्तेरभावेन दोषान्तरमुक्तमेकस्मिन्नित्यादिना। एतदेव प्रकटयति एतेनेति।

मूलपृष्ठम् १००—अतएव गोगौरित्यत्रापि न सेति। अस्यां प्रतीतावापादनीयत्वस्यैवाभावेन कोऽष्टापत्तिरित्यर्थः। निर्विकल्पकस्योल्लेखासम्भवेनापादनीयप्रतीतेराकारस्तु नोच्यते। तत्र भेदेऽनुभवादिति। एवं च शाब्देऽपि घटाद्भिन्न इत्यत्र घटप्रतियोगिकत्वस्यैव भानम्, अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेरिति भावः।

मूलपृष्ठम् १०१-विशिष्टशुद्धाधिकरणतयोरप्यभेदस्य दुर्वारत्वाच्चेति। न च द्रव्यान्तर्भावेनैव तयोरभेद इति गुणे शुद्धाधिकरणतैवेति साम्प्रतम्। सत्तात्वावच्छिन्नाधिकरणताया अनुगताया एवानुभवादिति भावः।

मूलपृष्ठम् १०२—मूले अन्योन्याभावोऽपि यस्माद्भेद एष्टव्य इति। अन्योन्याभावोऽपि यत्प्रतियोगिकभेदत्वेनैष्टव्य इति, अन्योन्याभावात्मको भेदपदार्थोऽपि यत्प्रतियोगिकत्वेनैष्टव्य इति वार्थः।

मूलपृष्ठम् १०३ – आत्माश्रयदुष्टमिति। संयोगेन संयोगो नास्तीति प्रतीत्या तु न प्रत्यवस्थानम्, तादृशाभावानामप्रामाणिकताया अनुमाननिरासे शारदायामुदितत्वात्। किञ्च, आत्माश्रयप्रसङ्गोऽप्युक्ताभावस्याप्रामाणिकत्वे हेतुः। अत एवेति। तादात्म्यस्याखण्डत्वादेवेत्यर्थः। संयोगात्यन्ताभाव इति। न च घटत्वाद्यवच्छिन्नप्रतियोगिताकात्यन्ताभावे एव कुतो नातिव्याप्तिरुपन्यस्ता, घटतादात्म्यस्यापि घटत्वरूपतायाः संयोगितादात्म्यस्य संयोगरूपतान्यायेनोपपत्तेरिति वाच्यम्, संयोगविशेषस्यानुयोगित्वेन प्रतिव्यक्तिविश्रान्ततया व्यक्तिविशेषतादात्म्यरूपतोपपत्तिः, न तु घटत्वस्यानेकव्यक्तिसाधारणस्य, न च तादात्म्यं सर्वेषां घटानां येन घटत्वस्य ताद्रूप्यं स्यात्। 'एको भावः सर्वभावस्वभावः सर्वे भावा एकभावस्वभावाः' इति मतेऽनुमाननिरासशारदायां दर्शनीये तु घटत्वस्य सर्वघटाभेदरूपतोपगमेन तदवच्छिन्नात्यन्ताभावेऽतिव्याप्तिरुपलक्षणीयैव। तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकसंसर्गाभावे

त्वतिव्याप्तिः संयोग्यत्यन्ताभावातिव्याप्त्या तुल्ययोगक्षेमैव। सम्बन्धात्मकत्वस्य तादात्म्ये विवक्षणे पुनः संयोग्यत्यन्ताभावादावेव वक्तुमुचिताऽतिव्याप्तिः।

निष्प्रयोजनतया पदत्वमपास्य तत्स्थाने शब्दत्वमेवोपास्यमित्युक्तावप्याह—

मूलपृष्ठम् १०४—भेदपदवाच्यताया एवेति।

'तद्भेदविशिष्टे एवायं वर्तते' इत्यत्र तद्भेदे व्यापकतावगाहनोपगमे आह—

मूलपृष्ठम् १०७—व्यापकताया अपीति। अत्राधिकं परतो व्यक्तम्।

मूलपृष्ठम् १०८—उपलक्ष्यतावच्छेदकसमानाधिकरणत्वे सतीत्यादि। जटाभिस्तापस इत्यादौ जटादिरूपोपलक्षणसाधारणमिदम्। शून्यत्वादिति। अविद्यमानत्वे सति व्यावर्तकत्वरूपमुपलक्षणत्वमपीह न शक्यशङ्कम्, घटभेदादेर्विद्यमानत्वादेवेति भावः।

मूलपृष्ठम् १०९—स्वस्मात्स्वभेदापत्तेरिति। योग्यतायां नियामकान्तराभावेन स्वरूपमात्रस्य च परं प्रतीव स्वं प्रत्यप्यविशिष्टत्वेन स्वेतरभेदधीजननयोग्यत्वमिव स्वस्मिन् स्वभेदधीजननयोग्यत्वमपि किन्न स्यादित्याशयेनेदम्।

मूलपृष्ठम् ११०—स्थवीय इति। कस्यचिदेकस्य सर्वत्र सुलभत्वेन व्याप्तिग्रहासम्भवात्। अनेकस्याप्येकव्याप्यताऽव्यवस्थिता, घटपटरूपानेकसत्त्वेऽपि कटरूपैकाभावात्। तथा च विशिष्यैव पर्यवसानमुपासनीयमितिभावः। घटादिभेदत्वं त्विति। घटाद्यनुयोगिकभेदत्वं त्वित्यर्थः।

मूलपृष्ठम् १११—त्वन्मते उद्भावितमनुमानादिकमपि बाधं कर्तुं न क्षमत इति योजनामाश्रित्य तात्पर्यार्थमाह—तथा चायमर्थ इति।

निर्विशेषगतधर्माणामभावरूपतयेति। ज्ञानत्वादेः स्वोपहितचिन्निष्ठत्वेन तत्तादात्म्यस्य शुद्धेऽभावे शुद्धं ब्रह्म ज्ञानात्मकमित्यादिव्यवहारानुपपत्तेरुपहितब्रह्मतादात्म्यस्य भावरूपस्य शुद्धे स्वीकार्यतयाऽग्रे वक्ष्यमाणत्वेऽपि तस्य नोपहितसाधारणता, अत्यन्ताभावे सम्बन्धानुपगमात्। इति खण्डने प्रत्यक्षबाधोद्धारशारदायां राजहंसः।

## खण्डनेऽद्वैतस्वरूपनिरूपणशारदायां राजहंसः।

मूलपृष्ठम् ११५—अद्वैतस्य व्याघातादिति। ज्ञाने उत्पत्त्यादिप्रत्ययस्योपाधीभूततद्विषयसम्बन्धविषयकत्वाल्लाघवादिसहकृतप्रागुपन्यस्तानुमानाच्च नित्यैकत्वस्वप्रकाशत्वसिद्धौ सत्यत्वावश्यम्भावेन तस्यातिरिक्ततायामद्वैतं व्याहन्यत एवेति ब्रह्मात्मकतैव, अतो गुणत्वे मानाभावेनाश्रयानेपक्षत्वाच्च, प्रत्युतात्मनस्तद्भिन्नत्वे पराधीनसिद्धिकत्वप्रसङ्गेन जडत्वदृश्यत्वयोरापत्त्या मिथ्यात्वप्रसङ्गः, चतुर्थे शारदायां दर्शितरीत्या दुर्निरूपतया मिथ्याभूतदृश्यत्वस्य मुक्तावनुवर्तनानुपपत्त्याऽस्फुरत आनन्दस्यापुमर्थताप्रसङ्गश्च। तदिदमाह आनन्दस्यानावृतत्वलाभायेति। आनन्दस्य नित्यैकत्वे तु वक्ष्यामः।

१ स्वप्रकाशवादोपक्रमशारदायाम्।

मूलपृष्ठम् ११६—पुरुषार्थतायां स्वातिरिक्तत्वस्याप्रयोजकत्वादिति। अत्रेदमपि द्रष्टव्यम्—स्वरूपभूतसुखस्य स्वीयत्वाज्ञानेनापुरुषार्थत्वं ब्रुवाणः प्रष्टव्यः, तस्मिन् स्वीयत्वज्ञानं वेदान्ततत्त्वज्ञानात्प्राङ् नास्ति, पश्चाद्वा, नाद्यः, प्राक् तादृशज्ञाने बाधकाभावादिति तावतैव मोक्षमार्गप्रवृत्त्युपपत्तिः, पश्चात्तु तादृशज्ञानस्यापेक्षैव नास्ति, बन्धस्यैव भ्रान्तिमूलकत्वेन काऽपेक्षा मोक्षकथाया इति प्राकृतनेषु स्वबोधेषु स्वयमेव भ्रमत्वावगमेन नाभिप्रेतालाभेन प्रतारणादोषः। एतच्च सुखे स्वीयत्वज्ञानस्येष्यमाणतौपयिकताभ्युपगमेन, वस्तुतस्तु संसारानलातिवेलसन्तप्तस्य स्वीयत्वादिकथायामनादर एव, तदादरे वा न मुमुक्षुतौपयिकसन्तापः। न चैवं दुःखं मे निवर्ततां किं मे सुखेनापीति निर्विण्णजनानुभवेन दुःखाभावस्यैव पुरुषार्थताऽऽस्ताम्, तस्य स्वरूपसत एव पुरुषार्थत्वेन ज्ञानमेव नापेक्ष्यते किं पुनः स्वीयत्वप्रकारकमिति वाच्यम्। लोके दुःखाभावस्थले तारतम्यवत्तयाऽनुभूयमानतया सुखं तावन्नापलपनीयम्, न च दुःखसामान्याभावे तारतम्यं मा भूत्, दुःखाभावकूटे तु प्रतियोगिन्यूनाधिक्येन तत्केन वार्यते; विशिष्य तत्तद्दुःखानां प्रतियोगिनां स्मरणाभावेऽपि सुखप्रत्ययात्। तुल्यभारवाहिनोः प्रबलमपेक्ष्य दुर्बले जने भारापगमकाले व्यञ्जनीयसुखे एवाधिक्यानुभवस्य वक्तव्यत्वाच्च, तत्र विजातीयदुःखध्वंसे प्रतियोगिगतो विशेषो न स्वास्वादार्हो ध्वंसगतोऽपीति दुःखाभावस्य सुखव्यञ्जकतासिद्धौ 'आनन्दो ब्रह्मेति व्यजाना' दिति श्रुतिसिद्धस्य स्वरूपसुखस्य मुक्तौ दुर्निवारत्वात्, नित्यैकब्रह्मात्मकतयैव च तस्य नित्यत्वैकत्वे। उत्पत्तिविनाशप्रत्ययस्य तारतम्यानुभवस्य चौपाधिकतयाप्युपपत्तेर्लाघवबलस्यानवहेलनीयत्वाच्च। तदेवं वस्तुगत्या दुःखाभावस्य सुखव्यञ्जकतयैव मुख्यपुरुषार्थताया उपेयत्वेऽपि रुचिवैचित्र्येण दुःखाभावमात्रस्य मुख्यतया कदाचित्केनचिदिष्यमाणत्वसम्भवेन तस्यापि मुख्यपुरुषार्थतोपगमेऽपि न काचित्क्षतिः, इच्छाया वस्तुगत्यननुरोधित्वात्।

नन्वन्येच्छानधीनेच्छाविषयत्वरूपमनन्यशेषत्वं सुखे प्रसिद्धम्, तस्यात्मरूपत्वे तु सिद्धतया तन्न सम्भवति सिद्धे इच्छानुदयात्; मैवम्, आत्मरूपताज्ञानात्पूर्वं सुखी स्यामितीच्छायां बाधकाभावात्, सुखेऽसिद्धत्वग्रहात्। न हि वस्तुगत्या सिद्धेऽपि धनादौ सिद्धत्वाभावग्रहदशायां सिद्धत्वाग्रहदशायां वा नेच्छा दृष्टचरी, तादृशज्ञानानन्तरं तु यदीच्छास्ति तर्हि सुखं मेऽनावृतमस्त्वित्याकारैव, आत्मनः सद्रूपेणानावृतत्वेऽपि सुखरूपेणावरणात्। उक्तं चैतट्टीकायामपि, अतएव—सुखे इच्छाविषयत्वं साध्यतयाऽनुवर्तमानतया च, साध्यता पुनर्व्यञ्जननीयता वोत्पादनीयता वा, आत्मनि तु सिद्धे मा न भूवं भूयासमिति नोक्तद्विविधसाधनीयतयेच्छा, अपि त्वनुवर्तमानतयैवेति वैजात्यात्कथं सुखात्मनो रैक्यं श्रुत्योक्तमप्युररीकर्तव्यम्, एवं च सुखलक्षणयोगादात्मनः सुखरूपत्वमिति मनोराज्यमात्रम्, उक्तरीत्या दुःखाभावेऽपि कस्यचिदन्येच्छानधीनेच्छाविषयत्वरूपानौपाधिकप्रेमास्पदत्वसम्भवे तु सुतरामिति—नाशङ्कनीयम्, अहमर्थसद्रूपताया अनावृतस्वभावतया पूर्वमेव लब्धपदतया च साध्यत्वेनेच्छाविषयत्वानुपपत्तावपि तदीयसुखरूपताया आवृततयैव तथात्वोपपत्तेर्धर्मिभेदकल्पनायां मानाभावात्। नहि कामपि व्यक्तिं भृशमिष्यमाणसङ्गमां पुरतो विलोकयन्नपि सैवेयमित्यप्रत्यभिजानानः पुनरपि तामन्विष्यंस्तस्या भेदं प्रयोजयति जनः, तत्कस्य हेतोः, तस्याः सैवेयमितिप्रत्यभिज्ञातव्यांशस्यावृतत्वेऽपि वस्तुगत्या तद्रूप्यादेवेति।

वस्तुतस्तु प्राकृतजनेच्छादिस्वरूपविमर्शेन तन्मात्रशरणैर्न कश्चित्पदार्थो व्यवस्थाप-

नीयो दार्शनिकैः, एवं हि मा न भुवं भूयासमितीच्छादर्शनेनात्मनोऽनित्यत्वमपि मन्तव्यं स्यात्, न हि तस्मिन् नित्यत्वग्रहे द्रढिमानमानीते तादृशीच्छा कस्यचिदुदेति, तस्य सततमनुवर्तमानतायाः स्वभावसिद्धत्वादिति प्रमाणानुसारेण प्राकृतजनानुभवदर्शितः पदार्थः समर्थनीयो बाधनीयो वेति ।

मूलपृष्ठम् ११७—तथा चरमे मनः परिणामे इति । चरममनः परिणामोत्तरदृश्याभावनियमस्तु नोच्यते, परममुक्तौ ध्वंसाद्यभावेन तद्धटितोत्तरत्वासम्भवात् ।

इति खण्डनेऽद्वैतस्वरूपनिरूपणशारदायां राजहंसः ।

## खण्डने मुमुक्षूपदेशशारदायां राजहंसः ।

मुमुक्षुकृत्यमधिकृत्य वक्तव्यस्य बहुत्वेऽपि परनिराकरणपरायणतयाऽत्र मूले शारदायां च विस्तरो नादृत इति न्यूनता न देशनीया ।

मूलपृष्ठम् ११७—अस्य धर्मस्याद्वैतचिन्तनस्येति । यद्यपि गीतायां निष्कामकर्मयोगस्य प्रस्तुतत्वादस्येति सर्वनाम्ना तस्यैव ग्रहणमुचितम्, तथापि तस्यापि महाभयनिवर्तकत्वं पापापहरणद्वाराऽद्वैतब्रह्मज्ञानजननेनैव वक्तव्यमिति भावेन प्रकृतखण्डनमूलमनुरुध्य व्याख्यातम् । 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति' इत्यनेन चायमर्थो दृढीक्रियते । अत्र ब्रह्मनिष्ठायाः सूक्ष्मकालसम्पादितायाः अपि महाफलोक्तेः । कालस्यान्तः सूक्ष्मांश इति यावत्, नत्वत्र मरणकाले वृद्धावस्थायां वेत्यर्थः, मरणकाले तावदिच्छापूर्वकप्राणत्यागकुशलेन योगिनैव ब्रह्मनिष्ठा सम्पाद्येवेति सङ्कुचितं व्याख्यानं स्यात् तादृशरीतिमविदुषोऽपि ब्रह्मविदुषो निर्वृतेः शास्त्रयुक्तिसिद्धत्वात्, ज्ञानेनैव ह्यज्ञाननिवृत्तिद्वारा तन्मूलो बन्धो विधूननीयः । वृद्धावस्थायाञ्चेषत्कालं ब्राह्मीमवस्थामवाप्तवतोऽनन्तरं प्रारब्धविशेषवशाद्बहु स्थितस्यापि निर्वाणभागितायाः अज्ञाननिवृत्तिबलादिष्टत्वात् । अतएव यदृच्छया ब्रह्मानुसन्धानसमये मृत्युप्रसक्त्यभिप्रायेण हि प्राणयोगिभिन्नेऽपि योजना न युज्यते, तथा सति मरणसमयेऽपरोक्षीकृतब्रह्मतत्त्वस्य ब्रह्मानुसन्धाने आवश्यकत्वप्रतीतिप्रसङ्गात्, न च घोररोगाद्युपद्रववशाच्चरमसमये स्मृतिवैकल्ये कैवल्यं विलुप्यते । तस्माद् यस्मिन् कस्मिन्नपि वयसि कालसूक्ष्मकलायामपि ब्राह्मी निष्ठा तत्कालविदेहकालयोः परमानन्दरूपकैवल्यप्रदेत्येव स्वारसिकोऽर्थः, एवं प्रकर्षद्योतकत्वात् । तथा च परमार्थसारे—

> 'तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
> ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः' ॥ इति ।
> 'यदा गुरुवरः सम्यक् कथयेत्तन्न संशयः ।
> मुक्तस्तेनैव कालेन यन्त्रस्तिष्ठति केवलम् ॥
> किं पुनश्चैकतानस्तु परे ब्रह्मणि यः सुधीः ।
> क्षणमात्रस्थितो योगी स मुक्तो मोचयेत्प्रजाः ॥'

इति च शिवसूत्रविमर्शिन्युदाहृतकुलरत्नमालिकायाम् ।

'यदि वातादिदोषेण मद्भक्तो मां तु विस्मरेत् ।
तर्हि स्मराम्यहं भक्तं नयामि परमां गतिम् ॥'

इति च भारद्वाजसंहितायाम् । ज्ञानिनोऽपि च भक्तेषु गणना गुरुणा त्रिजगन्निर्निमित्तमित्रेण गीतास्वादृतैव ।

किञ्च स्वल्पमप्यस्येति वाक्ये साक्षादपि सर्वनाम्नाऽद्वैतानुसंधानपरामर्शसंभवः, पूर्वं हि 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' इति प्रकृतम्, तत्र ज्ञेयतत्त्वं चिद्रूपं साङ्ख्यबुद्धेर्गोचरः, तादृशबुद्धिफलीभूतं सर्वास्ववस्थासु समतयाऽवस्थानं तु योगः, नहि चिन्मात्रतत्त्वसाक्षात्कृत्या द्वैतमतिमनपास्य कस्यापि समतयाऽवस्थानं सम्पत्तुं प्रभवति, साधनावस्थयां हि पदे पदे यतमानस्यापि वैषम्योद्भवो दुर्निवारः । समता तु चेतसोऽक्षोभरूपैका, तद्व्यङ्ग्या तत्त्वद्वैतभावात्मिका द्वितीया, 'निर्दोषं हि समं ब्रह्म'ेतिगीतायामेवोक्तेः, घटत्वात्मना घटानामिव ब्रह्मरूपमहासत्तात्मना सर्वेषां पदार्थानां समीभावात् । तथा च प्रागुक्तात्मतत्त्वज्ञानफलीभूतस्य चित्ताक्षोभव्यङ्ग्यस्याद्वैतब्रह्मभावेनावस्थानस्य स्वल्पकालं सम्पत्तिरपि महाभयविध्वंसनीत्यर्थेऽद्वैतदृष्टे दृष्टार्थतया क्रोडीकारः स्पष्ट इति । न चैवं 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दने'ति प्रश्नानुपपत्तिः, कर्मनिष्ठायाः पृथगनभिधानादिति वाच्यम्, चित्ताक्षोभव्यङ्ग्याद्वैतब्रह्मभावेनावस्थितिस्तावत्पुरुषार्थो नतु व्यवहारः, चित्ताक्षोभश्च व्यवहारकालापत्त्या व्यवहाराभावकाले सुसम्पाद इति किं व्यवहारमार्गप्रवेशेनेति प्रश्नसामञ्जस्यात् । व्यवहारमार्गेऽपि तादृशावस्थेत्येका निष्ठा जनकादीनाम्, व्यवहारत्यागमार्गे तादृशावस्थितिस्तु द्वितीया निष्ठा शुकसनत्कुमारप्रभृतीनामिति भावेन च लोकेऽस्मिन् द्विविधा निष्ठेत्यादिनोत्तरस्य सौष्ठवात् । तत्र देवकार्यानुरोधेन त्वयाऽर्जुनेन व्यवहारमार्गमाश्रित्यैव साऽवस्था सम्पाद्येति मत्वा 'तस्मादसक्तः सततं कार्यं कर्म समाचरे'ति वक्ष्यति श्रीनिवासः । 'श्रुतिविप्रतिपन्ना ते' इत्यनेन चोक्तावस्थाफलीभावःस्पष्टीकृतः ।

अयं व्याख्यानप्रकारश्च भाष्यकारादिभिरनादृतोऽपि योगवाशिष्ठोपदिष्टप्रणालीमूलो न त्याज्यो विदुषा, उपपन्नत्वात् ।

**पूर्वोक्तनियमोपगमे त्विति ।** अनया वचोव्यक्त्या तादृशनियमोपगमेऽनादरो व्यज्यते, तद्बीजं तु चरमपद्यशारदायां दर्शितम् ।

**मूलपृष्ठम् ११८-स्मृत्यन्तरेणेति ।** परिपूर्णानन्दास्वादेऽमुना विक्षेपावरणयोरवश्यं निवार्यतया शुष्कयोगमात्रस्य च साक्षादभीष्टानभ्युपायतयाऽऽपातज्ञानवतो योगमार्गेण विक्षेपनिवृत्तिपुरस्सरमावरणनिवृत्तिः, विचारधारावैशारद्यं गतस्य तु पूर्वमेवावरणनिवृत्त्याऽसति प्रतिबन्धकविशेषेऽनायाससाध्यसात्त्विकोपायैरेव समाधिलाभेन विक्षेपापाकृतिरिति योगविचारयोः प्राधन्याप्राधान्ये आदाय मार्गद्वयविभागो मान्यनिबन्धेषु, नतु सर्वथैव परस्परविनाभूततामभिप्रेत्य, अतएव 'समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' ।

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्' ॥ [ कठ० ]
'तं पूर्वापररात्रेषु युञ्जानः सततं बुधः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ [म.भा.शान्ति.]

इत्यादिका श्रुतिस्मृतिविततिः पुरुषविशेषमनादायैवावश्यकतां समाधेर्ध्वनयति, विशे
पदशायामुक्तानन्दास्वादानुपपत्तेः, अतएव तादृशानन्दसाक्षात्कारपर्यवसायिज्ञानफलकवेदा-
न्तविचारे साधनचतुष्टयसम्पत्तिरुपयुज्यते, तत्तत्पङ्क्त्यर्थं प्रतिपत्त्यनुकूलावधानमात्रस्य शास्त्रा-
न्तरसाधारण्यात्, प्रत्युत नव्यन्याय एव, तस्याधिकमपेक्षणीयत्वात्, कामुकादिप्रकृतीनां
सूक्ष्मधीसद्भावे वेदान्तविचारे नैपुणीदर्शनेन वैराग्यादेः सर्वथैवानपेक्षणीयत्वप्रसङ्गात्
तीव्रशक्तिपातोदाहरणे तु सहजावस्थाऽपरपर्यायात्मविश्रान्तिरनायासेनैव सम्पद्यत इ...
विशेषः, नत्वेतावतोक्तानन्दास्वादे समाधेर्हेतुताऽवहीयते ।

'आत्मप्रबोधो भगवन् सर्वाशातृणपावकः ।
प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः ॥
बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि ।
अविश्रान्तस्वभावस्य कः समाधिः कथं च वा' ॥ [योगवासिष्ठे]
'प्रसह्य चञ्चलीत्येव योगिनामपि यन्मनः ।
यत्र यत्र मनो याति ज्ञेयं तत्रैव चिन्तयेत् ॥
चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः । [स्वच्छन्दतन्त्रे]

इत्यादिकं वचनं तु सहजावस्थाया उपादेयतमत्वमवद्योतयति, न तु विजातीयानन्दा-
नुभवेऽपेक्षां समाधेरवधीरयति, प्रत्युत सहजावस्थायामप्यधिकारिवैचित्र्येण समाधेः श्लाघि-
ताऽभिप्रायेण

विगतविषयतृष्णावासने स्वान्तरङ्गे,
विमलमुकुरतुल्ये निश्चले स्वात्मनैव ।
तव जननि कलां तां योगिनः प्रेक्षमाणाः
परमसुखपदस्थास्ते हि धन्या जयन्ति ॥
इति चिरतरकालं त्वत्स्वरूपं विमृश्या-
न्तरभुविदृढभावाःस्युर्निसर्गस्वभावाः ।
तदनु बहिरशेषं त्वत्स्वरूपं विमृशन्त-
स्त्वयि परमविलासास्ते हि योगीन्द्रपूज्याः ॥ [त्रिपुरार...]

इत्यादिको महात्मनां वचोनिवहः। एतेन—'योगेन रहितं ज्ञानं न मोक्षाय भवेत्'
इति योगशिखोपनिषदुक्तमपि व्याख्यातम्, विक्षेपनिवर्तकतावच्छेदकावरणनिवर्तक...
च्छेदकधर्मावच्छिन्नसमवधानाधीनो निस्सीमसुखस्यन्दोऽपुनर्भवश्चेति हि तत्तात्पर्य...
चकास्ति । यस्तु तादृशसुखस्यन्दनानिपुणमपि बोधं ब्रह्मसाक्षात्कारमुररीकरोति, तेन ...
स्तादृशसुखात्मकताऽपि त्यक्तव्यैवेत्यलमतिवेलं वचोविलासेन ।

तत्राद्य[1] मार्गे प्राणनिरोधयत्नप्राधान्यमिति प्राणनिरोधयत्नपूर्वको मनोनि...
द्वितीये[2] तु मनोनिरोधयत्नप्राधान्यमिति मनोनिरोधयत्नपूर्वकः प्राणनिरोध इति विशे...
प्रथममार्गेऽपि तु मनसि प्राणानुसरणकारितासम्पत्त्येऽवधानलेशोऽपेक्ष्यत एवेत्यादिकं ...
नुभूय विवेक्तव्यम्। प्रभञ्जनायमनं=प्राणायामः। जडदर्शनेन जडता जनितेति।
पूर्वजडाध्यासस्योत्तरोत्तरजडाध्यासहेतुत्वादिति भावः

१ योगमार्गे । २ विचारमार्गे ।

किं खन्त्याज्यं नित्यं ? द्वैतस्मरणं मनश्च तज्जनकम् ।
मननैः समनो द्वैतस्मरणं मरणं मयाऽवगतम् ॥ १० ॥
मूलाधारात्समुत्थाय बिले ब्राह्मे[1] विलासिनी ।
विद्युदन्तस्तमोराशिं धुनोतु नश्शिवाङ्कगा ॥ ११ ॥
द्वादशान्ते मनः प्राणान् खन्निरुध्यातियत्नतः ।
पूर्णाहम्भावपूर्णानामन्तः संवित्सुखायताम् ॥ १२ ॥
अहङ्कारपिशाचेन दृप्यते यत्र नो मनाक् ।
अवच्छेदविदूरा सा विश्वात्मता वितायताम् ॥ १३ ॥
रोध्यमेव मनो यत्र प्राणो वा नैव लभ्यते ।
लभ्यं किं रोधनोपायैस्तत्पदं समुपास्यताम् ॥ १४ ॥
मूलात्सङ्कल्पमालूय शून्यता यत्र दृश्यते ।
शून्येऽपि पूर्णता यत्र नित्यं तन्महतां महः ॥ १५ ॥
यत्साध्यप्रसादत्वान्नेश्वरं बहु मन्महे ।
तत्प्रसादमवाप्तांस्तु मनसा शिरसाऽपि च ॥ १६ ॥
रागद्वेषावपाकृत्य योगेनैकात्म्यदर्शिनाम् ।
व्युत्थाने सावधानानां पादपांसुः पुनातु माम् ॥ १७ ॥
आर्जवं दर्पराहित्यं गौरवं गौरवे रवे ।
अयं यस्यास्त्यसौ शक्यो न स्तोतुं कविना विना ॥ १८ ॥
दृष्ट्वा गुणगणान् क्वापि दोषान् परश्शतानपि ।
नो जहात्येव यत्साम्यं प्रत्यक्षं तं शिवं श्रये ॥ १९ ॥
निष्किञ्चनत्वं च विवासनत्वं विश्वात्मभावं च समाधिसिद्धम् ।
अप्राप्य सम्पत्तिमिमाममोघां परोपकारः परवञ्चनैव ॥ २० ॥

एको योगी न चान्योऽस्ति स एव ज्ञानवानपि ।
कविरेकः स एवेश इति ज्ञाते क वासना ॥ २१ ॥
विश्वात्मताऽवबोधेऽपि किञ्चिदिच्छति यश्शठः ।
पापैराक्रम्य क्रान्तोऽसौ दयनीयो महात्मनाम् ॥ २२ ॥
आलम्बनमवाप्यापि कामपि चरणद्वयीम् ।
लौकिकालम्बनापेक्षी गणे कस्मिन्निपात्यताम् ॥ २३ ॥
नैव मान्यः स सर्वस्य गुरुत्वं योऽभिमन्यते ।
सर्वशिष्यत्वमाप्तं तु मानयामो वयं मुदा ॥ २४ ॥
प्रतिष्ठावासनालिप्तं गणयामो न साधुषु ।
तदन्यं तु नमस्यामो बहिरन्तश्च सर्वदा ॥ २५ ॥
अथवा किमवच्छेदै ब्रह्मभूयं गतोऽखिलः ।
इति मत्वा परं साम्यमाश्रये हरिणेरितम्[2] ॥ २६ ॥

---

१ ब्रह्मरन्ध्रे । २ 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' इत्यादिना गीतासु ।

मातस्त्वदीयपदपद्मपरागरागो—
नो रागलेशमपि मे हृदये शिनष्टु ।
त्वत्पाणिपङ्कजगतं कमनीयपाशं
रागं स्वभक्तहृदयापहृतं हि मन्ये ॥ २७ ॥

इच्छोच्छेदोद्धुरं यद्धुतमननदशं द्वैतदावानलेऽपि
पूर्णोल्लासान् प्रयच्छज्जितमदनजवैर्योगिभिर्भावनीयम् ।
विश्वोत्तीर्णस्य शुष्म[1]द्युम[2]णिशशिदृशो भूरिभर्गस्य वित्त-
मास्तां नित्योदितं तन्मम मसृणमतावम्बिकापादयुग्मम् ॥ २८ ॥

शोभां न द्वैत[3]शून्ये परमसुखतया श्रुयमाणेऽपि देवे,
विद्यामाद्यां विना यां सकलसुरनुतां सापि येषां प्रसादे ।
इज्यांसाम्राज्यभाजोऽगणितगुणगणान्शम्भुभावाद्धुतांस्तान्
श्रीविद्यानन्दनाथान् द्रविडयतिवरान् मन्महे नादरैः कैः ॥ २९ ॥

इति खण्डने मुमुक्षूपदेशशारदायां राजहंसः ।

---

१ अग्निः २ सूर्यः ३ भावुकताप्रयुक्तमुक्तिवैचित्र्यमिदं विद्याविशेषे श्रद्धातिशयं व्यनक्ति न तु वस्तुतोऽपि द्वैते रुचिरिति भ्रमितव्यम् ।

## लक्षणसामान्यखण्डनशारदायां राजहंसः ।

यत्राप्रवर्तमानं स्यान्मान[1]वं मानवं वचः ।
निश्चेतव्यं हि तत्केन हेतुना साधुनाऽधुना ॥ ३० ॥

मूलपृष्ठम् १२१—मूलाधारामिति । बहुव्रीहिणा मूलाधारचक्रवासिनीमित्यर्थः, मूलपदस्य मूलचक्रपरत्वात् । तत्पुरुषेण त्वाधारत्वस्यौपनिषदरीत्या कल्पितत्वाभिप्रायेण मूलाधारवदाचरन्तीमित्यर्थः । क्षित्यादिशिवान्तषट्त्रिंशत्तत्त्वनिवहस्याश्रितानाश्रितभेदेन द्वैविध्यमभिप्रेत्याधाराधेयेति । तयोः प्रकाशिकां परमशिवरूपतयेत्यर्थः । "आतश्चोपसर्गे" इत्यङि आधा=आधानं प्रपञ्चानाम्, लक्षणया तत्प्रयोजिका माया, राधेयस्त्वपरिच्छिन्नात्ममहिमतया कर्णसदृशो जीवः, तयोश्चेतनामित्यप्यर्थः । चेत्यचक्रपरामिति । 'ज्ञाता स्वात्मा भवेज्ज्ञानमर्घ्यं ज्ञेयं बहिःस्थितम् । श्रीचक्रं पूजनं तेषामेकीकरणमीरितमिति तन्त्रराजोक्त्या चेत्यं=ज्ञेयं तदेव चक्रं=श्रीचक्रं तत्परं=प्रधानमधिष्ठेयत्वेन यस्यास्तामित्यर्थः । किञ्च चेत्यषट्चक्रोर्ध्ववर्तिनीं चेत्यवर्गोत्तीर्णां चेत्यर्थः । शान्तामिति । पार्थिवप्राकृतमायिकशाक्ताण्डेषु क्रमेण तत्तत्तत्त्वानुगतशक्तिविशेषात्मिका निवृत्तिप्रतिष्ठाविद्याशान्ताख्याः कला राजन्ते, तेषु चरमामित्यर्थः । शान्तातीता तु शिवे, परमशिवस्तु कलातीत इति । किञ्च ब्रह्मविष्णुरुद्रात्मकवामाज्येष्ठारौद्र्याख्यशक्तित्रयसमष्टिरूपेणापि शान्तापदबोध्यत्वं तुरीयशक्तेः । भारतीपृथिवीरुद्राण्याख्यशक्तित्रयसमष्टिरूपा तु तुरीयाऽम्बिकाख्येत्यन्यत् । किञ्च निवृत्तकलाकलनामित्यर्थः, तथा चौन्मनसे पदे स्थितामित्याशयः । किञ्च स्वरूपाच्छादकतादशातिवर्तितया शान्तां शक्तिम्, यदाहुः—

"एवमस्यात्मनः काले कस्मिंश्चिद्योग्यतावशात् ।
शैवी सम्बध्यते शक्तिः शान्ता मुक्तिफलप्रदा ॥"

इति श्रीमालिनीविजये । शान्तां सकलक्लेशापगमव्यङ्ग्यपरमानन्दरूपामिति त्वौपनिषदसाधारणम् । समुपास्महे इति । परा, परापरा, ऽपरेति त्रिविधोपासनासु द्वैतस्फूर्तिसामान्याभावकालीनस्वतःस्फूर्तिः, द्वैतप्रविलापनम्, बाह्यार्चनमित्येवंरूपासु नैरन्तर्यसत्कारप्रेमादिरूपोत्कर्षलाभाय समुपसर्गः । कालत्रयेऽपि यः कोऽप्येवमुपास्ते सोऽहमेवेति दृढनिश्चयाद्बहुवचनस्योत्तमपुरुषस्य च प्रयोगो न तु देहविशेषाभिमानेनेति नाविनयः ।

माऽयं परशिवाया भूद्दयाया भाजनं जनः ।
मन्यते तु तमात्मानं यस्तथा सुकृतैः कृतः ॥ ३१ ॥

पर्यवसानमिति भाव इति । आर्थिकमिथ्यात्वनियतब्रह्मसर्वाऽभेदवादेऽपि व्यावर्तकनिरासेनैवाभीष्टसिद्धिः, अतएव 'तन्निरासोपयोगितया द्वारासम्भवमेवाहे' त्यवतारितमनुपदम् । अप्रमितानीति । प्रमाणानामपि लक्षणखण्डनेऽप्रमाणसाधारणतया लक्ष्यव्यवस्था-

---

१ मया=प्रमया नवं स्तुतम्, तज्जनकत्वात्, णु स्तुताविति स्मरणात्, श्रुतिरूपं मानं मूलतया वाति गच्छतीति वा, ईदृशं मनोर्भगवतो वच इत्यर्थः ।

पकत्वेनेव स्वरूपेणापि लक्षणानामप्रमितत्वपर्यवसानमित्याशयेनाप्रमितत्वमात्रमर्थं आह- निबन्धोक्तेति। निबन्धपदेनोदयनाचार्याणां तात्पर्यपरिशुद्धिर्नैयायिकैर्व्यवह्रियते। कथन्त्व- निर्वाच्यवाद इति। विरोधेनैकतरस्य मिथ्यात्वावश्यकत्वात्, अभेदस्यापि च भेदप्रतियोगि- कत्वेनानिर्वाच्यत्वादिति भावः। एवं च सतीति। वस्त्वनवस्थासाधने च सतीत्यर्थः।

मूलपृष्ठम् १२२ – ज्ञानाधिकरणादीति पाठे इति। यत्त्वस्मिन् पाठे प्राचां व्याख्या- नम्–लक्षणमात्रस्यापेक्षणीयं ज्ञानम्, स्वरूपसतोऽव्यावर्तकत्वात्, तच्च किमिति प्र- ज्ञानत्वयोगीति वाच्यम्, इच्छादिकारणतावच्छेदकतया वा स्वरूपतो वा ज्ञानत्वत्वेन ज्ञानत्वं ज्ञानस्य लक्षणमित्यन्यत्। ज्ञानत्वं च सुखाद्यवृत्तिरात्मविशेषगुणवृत्तिर्जातिरिति निर्वाच्यम्, जातिस्त्वनुवृत्तप्रत्ययासाधारणकारणमिति निर्वाच्येति ज्ञानसिद्धौ जातित्वसिद्धिः तत्सिद्धौ च ज्ञानत्वसिद्धिः, तत्सिद्धौ च ज्ञानसिद्धिरिति चक्रकम्, परस्परया ज्ञानसिद्धे- नर्वाक्सिद्धिं ज्ञानसिद्धिं चापेक्षमाणतया त्वन्योन्याश्रयात्माश्रयौ। तथा लक्षणानि लक्ष्या- करणानिर्वाच्यानि, अधिकरणत्वं चेहप्रत्ययविषयत्वम्, प्रत्ययलक्षणं च पूर्ववत्, प्रत्ययत्वं तथैवेति तत्रात्मप्रवेशः, आत्मा चात्मत्वाधिकरणम्, अधिकरणं चेहप्रत्ययविषय इ- चक्रकम्, आत्माश्रयान्योन्याश्रयावपि प्राग्वत्परम्परयेत्यादि। तत्तु नादृतम् ईदृशादि- चक्रकाद्यस्पृष्टलक्षणानामपि सम्भवात्। यद्यपि तान्यपि शारदायां तत्र तत्र निरस्तानि तथापि लक्षणविशेषमनाश्रित्य लक्षणसामान्यखण्डने प्रथमाया अस्याः पङ्क्तेरुपयो- चित्यम्, अन्यथा खण्डनान्तरसापेक्षतया वा लक्षणविशेषखण्डनपर्यवसायितया वा नास्याः सदुपयोगः स्यादिति सुधीभिरवधेयम्। एवमन्यत्रापि शारदायां प्राचीनव्याख्यानानि निष्फल- गौरवभीरुतयाऽनुपन्यस्यैव नव्यन्यायखण्डनार्थं नव्यरीत्या मूलपरिष्क्रियाऽऽदृता, नव्यन्यायविदामनिर्वाच्यवादं रोचयमानानां परितोषः स्यादिति स्वयं तत्र तत्रान्वेषणीयम्। आमूलमामौलि चास्मिन्निबन्धे खण्डनचातुर्विध्यमिति यथायथं तत्र तत्र विवेक्तव्यम्, किं- दानुभवविरोधेन पूर्वपक्षावधूननं प्रथमम्, कञ्चिद्दर्शनसिद्धान्तमाश्रित्य प्रत्यवस्थानं द्वितीयम्, परिष्कारप्रणालीमवलम्ब्यैवाव्याप्तिप्रभृतिदूषणैः परिष्कारपराकरणं तृतीयम्, ऋजुमतीनां यत्तु चित्तं नावर्जयति, अतिप्रसक्तमिवावगम्यमानं हि, नापि च पार्यते प्रत्युत्तरीतुम्, तच्च वितण्डामात्राश्रितम्।

मूलपृष्ठम् १२३ – अलङ्कर्मीणत्वात् = कर्मणे प्रभुत्वात्, कृतकार्यत्वादिति तात्पर्यम्। तादृशधर्माणामसङ्ख्येयत्वादिति। न च गन्धत्वघटितत्वेन तेषामनुगमः, एकैक- साधारणस्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षया च गन्धत्वावच्छिन्ननिरूपकताऽपि शक्या विवक्षितुमिति वाच्यम्, तादृशनिरूपकतायाः स्वरूपसम्बन्धविशेषात्मकतया नानात्वे तत्रैव प्रत्येकमिलितविकल्पसम्भवात्। निरूपकताया अनुगताखण्डोपाधित्वं तथाभूतनिरूप- कतात्वेन वाऽनुगतत्वमित्यपि मनोरथमात्रम्, अनुगतधर्ममात्रस्य प्रत्यक्षखण्डनशारदायां निरासात्, प्रतीतिविशेषसाक्षिकतयैवाखण्डोपाधिनिरूपणे च प्रतीतिविषययोः प्रमा- सत्यत्वे च परस्पराश्रिततया दौःस्थ्यस्य तत्र तत्र दर्शितत्वादिति भावः। इति लक्षणसा- मान्यखण्डनशारदायां राजहंसः।

# तत्त्वपदार्थखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् १२५—ननु वृत्तित्वस्य स्वरूपसम्बन्धविशेषरूपतयाऽननुगतत्वेन तद्घटितप्रमेयत्वत्वस्यापि तथात्वेऽपि प्रमात्वस्यैव स्वाश्रयनिरूपितविषयतात्वसम्बन्धेन प्रमेयत्वत्वरूपतायां न दोष इत्यत आह—प्रमात्वस्यानुगन्तुमशक्यत्वादिति । इदं सकलप्रमेयवृत्तित्वादिघटितत्वपक्षेऽपि साधारणम् ।

मूलपृष्ठम् १२६—मूले रक्तपित्तिनेति । रक्तयुक्तं वा रक्तवर्णं वा रक्तदूषकं वा पित्तं रक्तपित्तम् । परमाण्वादेरनधिकरणकस्येति । समवायेन परमाणुमत्ताप्रतीतेर्भ्रमत्वात्, निरवयवतया परमाणोः परमाण्वन्तरेण संयोगस्य व्याप्यवृत्तितयाऽऽधाराधेयभावानुपपादकत्वात् । वातादौ त्वनवरतपरिस्पन्दमानपरमाण्वनधिकरणतायां यदि कश्चिद्विप्रतिपद्येत तदाप्यादिपदमुपात्तमेव, तेन स्वामित्वादिसम्बन्धेनानधिकरणकं धनादिकमुपादेयम् । तथाभूत एव चेति । तथाभूतकालस्येदानीं घटोऽत्रेतिप्रतीतिविषयता तूपनयमहिम्ना वा मीमांसकवत् कालस्य सर्वेन्द्रियग्राह्यत्वाभ्युपगमेन वेत्यन्यत् ।

मूलपृष्ठम् १२७—कार्याव्यवहितप्राक्क्षणावच्छेदेनेति । न च तादृशक्षणावच्छेदेन तादृशक्षणस्यात्माश्रयप्रसङ्गभयेनावृत्तित्वोपगमेऽत्यन्ताभावध्रौव्येण तस्य कारणत्वानुपपत्तिः; उपाधितयाऽवच्छेदकताविवक्षायामदोषात् । तादृशावच्छेदकतापक्षेऽपि भेदखण्डनशारदोदितदिशाऽऽत्माश्रयापत्त्यनुसन्धानेन तु स्वरूपसम्बन्धविशेषादिरूपस्येत्युक्तम्, स्वं न स्वीयमित्यनुभवेन स्वरूपसम्बन्धविशेषरूपताया अपि त्यागे त्वादिपदं पदार्थान्तरताभिप्रायेण । प्राय इति । एतत फलं 'प्रमित्यभावेने' तिप्रतीकस्थटीकायामग्रे व्यञ्जितम् ।

मूलपृष्ठम् १२८—कारणत्वत्वेनानुगतप्रतीत्याद्यनुपपत्तेरिति । उपलक्षणमिदं कारणत्वत्वविषयकधियः कारणातिरिक्तविषयकत्वेनाव्याप्तेरपि, कारणत्वत्वेऽपि कारणत्वोपगमेऽन्योन्याश्रयात् । यत्किञ्चिद्धर्मवत्त्वोक्तावननुगम इति । कारणताया अननुगमे तदवच्छेदकत्वस्यापि न सम्भवत्यनुगम इति तेन रूपेण निवेशेन न निस्तार इति भावः । अवश्यं कारणताया इति । मूलेऽवश्येति शब्दो न मान्तः सन् समस्तः, "लुम्पेदवश्यमः कृत्ये" इत्येव नियमात्, अपि तु स्वरान्त एव, अत एव शेखरे 'अवश्यप्राप्ति'विति हल्सन्धौ प्रयुक्तम्, इत्थमेव चावश्यकशब्दोऽपि सिद्ध्यति, मान्तस्य योपधत्वाभावेन वुञोऽसम्भवात् । प्रसङ्गविपर्ययाभ्यामिति । कुशूलस्थतादृशावच्छिन्नं बीजं यद्यङ्कुरसमर्थं स्यादङ्कुरोपधायकं स्यात्, न चैवं तस्मान्न समर्थमिति क्षेत्रस्थबीजात्समर्थाद्भेदसिद्धौ क्षणिकत्वे पर्यवसानम्, फलोपधायकत्वं हि यदि सत्त्वम्, तदा तदभावे व्योमकुसुमान्तेवासितां गतस्य कथं सामर्थ्यम् । एतेन योग्यतासद्भावेऽपि सहकारिविरहान्न कार्यमिति नात्र सावसरम्, तथा सति फलोधायकत्वस्य सत्त्वरूपतात्यागात् । इति तत्त्वपदार्थखण्डनशारदायां राजहंसः ।

## अनुभवत्वस्य जातित्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् १२८-विशेषपदमिति । एतेनैवानुमितित्वादेरपि व्यावृत्तिः, तथाचानुभवा-मीतिधीसिद्धजातिनिवेशे तात्पर्यम् ।

मूलपृष्ठम् १३१-बाधकतामालम्बेतेति । अथात्रापि संस्कारेन्द्रियाद्यात्मकविरुद्ध-सामग्रीप्रयोज्यतया कथं स्मृतित्वानुभूतित्वयोः साङ्कर्यं न बाधकम्, अन्यथा नीलत्वपीत-देरपि सङ्करः किमिति नेष्यते इति चेन्न तत्तांशे इदन्तांशे च स्मृतित्वस्यानुभूतित्वस्य चेहानु-व्यवसीयमानत्वे सामग्रीविरोधस्यैवासिद्धेः, सम्भूयकारित्वसम्भवादिति भावः ।

मूलपृष्ठम् १३२-नासङ्गतिरिति । ननूद्देश्यविधेयभावसामञ्जस्यायायमित्यनेन वर्त-मानसमयावच्छिन्नमुद्दिश्य वर्तमानानुभवविषयत्वरूपेदन्तावैशिष्ट्यामभेदश्च विधीयताम्, एवं स इत्यनेनातीतसमयावच्छिन्नमुद्दिश्य पूर्वानुभवविषयत्वम्, वैपरीत्येन वोद्देश्यविधेयभाव इत्यत आह—नवोपरितनेति । एवं सति प्रागवस्थाविशिष्टः स इत्यस्य निराकाङ्क्षत्वं न प्रतियोगिविधयाऽभेदान्वयित्वं स्यात्, अभेदांशस्य साकाङ्क्षत्वमात्रेणान्वयोपगमे तत्त-न्ताविशिष्टादभिन्न इदन्ताविशिष्ट इत्येतद्विषयकत्वं कुतो न प्रत्यभिज्ञानस्य स्यात्, इदन्त्वं भेदस्योक्तत्वेन तथान्वयबाधेऽपि बाधकाभावात्, अंशैक्येन च तत्ताविशिष्टादपि सन्निधाने त्कर्षात् । इदन्त्वत्वत्यैक्येन कथं तथा बोध इति तु न वाच्यम्, तस्य सोऽयमित्यादिप्रत्य-भिज्ञानेऽपरिस्फुरणादिति भावः ।

मूलपृष्ठम् १३४—अनिर्वचनीयवाद इति । विरुद्धयोरेकतरस्य मिथ्यात्वावश्यम्भा-वात् । अभेदस्यापि च भेदप्रतियोगिकत्वेन मिथ्यात्वादिति भावः प्रागुक्तः स्मर्तव्य. साङ्कर्यमिति । तादृशनिरूपकत्वयोरनवच्छिन्नवृत्तित्वे विरोधानिवारकत्वादवच्छिन्नवृत्तिक-त्ववच्छेदकस्यानवच्छिन्नवृत्तिकत्वे उक्तदोषात्, अवच्छिन्नवृत्तिकत्वे त्वत्माश्रयान्योन्याश्रया-वस्थान्यतमापातात्, एवमन्यत्रापि विरुद्धसमावेशाभ्युपगम इत्यपि द्रष्टव्यम् । धर्म्यांशे वृत्तिमत्त्वेति । समूहालम्बने प्रकारांशेऽप्यांशिकप्रमात्वसम्भवेनादिपदम् ।

मूलपृष्ठम् १३५—दुराग्रहे त्विति । भाविग्रन्थेन पौनरुक्त्यप्रसङ्गाद् दुरिति । प्रतियो-गित्वेनैव संस्कारस्येति । इदं सामान्यकार्यकारणभावाभिप्रायेण, प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति तादात्म्येन संस्कारत्वेन कारणतोपगमे तु समवायसम्बन्धावच्छिन्न-कारणतायां शक्यनिवेशमिति भावः ।

मूलपृष्ठम् १३६—अत्र कल्पे इति । पूर्वकल्पे तु व्याप्तिघटकसामानाधिकरण्ये भा-पदार्थता पर्यवस्यतीति भावः ।

मूलपृष्ठम् १३८—ननु तादात्म्येन भ्रमे तस्य सम्बन्धिरूपतया सत्त्वेव, समवायादि-भ्रमेऽपि समवायादेरन्यत्र प्रसिद्धत्वात्तत्सम्बन्धस्य चानतिरेकान्नासत्त्वम्, संयोगस्थलेऽपि तत्सम्बन्धसम्बन्धस्य स्वरूपात्मकत्वैवेत्यत आह—सम्बन्धसम्बन्धिनोरिति । अत्रापि





प्रत्यक्षखण्डनशारदायां सामान्यनिरुक्तिनिरासशारदायां च दर्शितम्। शक्तिविशेषविशिष्टत्वेनेति। शक्तिरियं तार्किकाणां शिरोमण्यादीनामपि सम्मतैव, भाट्टरीत्यापि च शङ्कासम्भवः। प्राचीनव्याख्यानं तु तुच्छत्वात्सर्वथैव शारदायामुपेक्षितम्।

मूलपृष्ठम् १४१—अनभिधानापत्तेश्चेति। तादृशप्रत्यभिज्ञानेऽपि घटविशेषणतया तत्ताभानसम्भवादित्याशयः।

मूलपृष्ठम् १४२—अप्रसिद्धमेव स्यादिति। ननु घटाभावादिप्रत्यक्षे तादृशविशेषणाप्रसिद्धावप्याधारतादेरपि विशेषणतया ग्रहणेन तत्प्रत्यक्षान्तर्भावेनैव व्याप्तिसिद्धिरास्ताम्, मैवम्, तथा सति घटाभावादेरयोग्याधिकरणेऽपि प्रत्यक्षप्रसङ्गात्साधारण्यस्यावश्यकत्वात्। प्रतियोगितात्वस्याननुगतत्वे आधारत्वाधेयत्वादेरपि परस्परप्रतियोगिकत्वेन कदाचित्स्वग्राहकेन्द्रियजग्रहणाविषयाश्रयकाधारतादिप्रतियोगिकत्वस्याधेयत्वादौ सत्त्वया तत्राप्यप्रसिद्धेश्च, आधारतादेः स्वरूपसम्बन्धरूपतापक्षे विशेषणतासन्निकर्षेण तत्प्रत्यक्षाभावेऽपि क्षत्यभावाच्चेति भावः। तदधिकरणीयत्वेति। तदा पिशाचत्वाद्यभावपरामर्शः। पिशाचत्वं यदि घटाधिकरणकं स्यादुपलभ्येतेति हि प्रसङ्गः। अन्यथोपपादितत्वेनेति। कचिच्चोद्भूतरूपावच्छिन्नत्वमेवेत्यनन्तरग्रन्थेनेति द्रष्टव्याम्।

मूलपृष्ठम् १४३ - व्यञ्जकविशेषावच्छिन्नत्वेत्यादि। क्षत्रियादिपितृजत्वग्रहविषयस्वरूपयोग्यताविशिष्टं सम्बद्धं च यत्तद्विशेषणतया इत्यर्थः। प्रायो हि पूर्वं कदाचिद्योनिविशेषेण ब्राह्मणत्वादि प्रयुक्तमासीदिति भावः। अतादात्म्यसाधारणस्येति। तादात्म्यव्यावृत्तस्येत्यर्थः।

मूलपृष्ठम् १४५—तदेतदभेद इति। अत्र द्वन्द्वविवक्षायां 'त्यदादीनां मिथः सहोक्ता' वित्येकशेषप्रसङ्ग इति भावेनान्यथा व्याचष्टे तत्तावच्छिन्नेनेत्यादि।

मूलपृष्ठम् १४६—स्मृतौ चेन्द्रियेत्यादि। मनःसंयुक्तात्मसमवेतसंस्कारविशेषणीभूतधर्मिविशेषविशेषणतयेत्यर्थः। स वह्निरिति सहप्रयोगानुपपादनादिति। संस्कारजज्ञानविषयत्वेन संस्कारविषयत्वेनैव वा बोधक इह तच्छब्द इति हि न युक्तम्। प्रयोगस्य वक्तुरिच्छानुसारितया तत्तावैशिष्ट्यबुबोधयिषयाऽपि प्रयोगसम्भवात्, नहि तादृशविषयत्वमेव तत्तेति साम्प्रतम्, तादृशविषयः स इति सामानाधिकरण्यव्यवहारानुपपत्तेरिति भावः।

मूलपृष्ठम १४८—उक्तं पञ्चेति। नचाभावस्यानतिरेकेऽप्यभावत्वस्यातिरिक्ततायौव्येण तत्प्रकारकप्रतीत्यर्थं षष्ठप्रमाणोपगम आवश्यक इति वाच्यम्, प्रतियोगितावच्छेदकप्रकारकज्ञानजन्यतयैवाभावत्वरूपविचित्राकारज्ञानसम्भवात्; यद्वक्ष्यति चतुर्थे 'गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवा' निति।

अनुमानाङ्गमिति। सामान्यलक्षणा तु प्रत्यासत्तिरनुमाननिरासशारदोदितदिशा नोपेयते प्राभाकरैरेति नाग्नित्वादिरूपेणापि साध्यव्यक्त्यवगमः प्रागिति भावः।

मूलपृष्ठम् १५०—स्वतन्त्रोपस्थितेति । रजते नेदं रजतमिति व्यवहारस्थले प्रवृत्तिः स्यात्, भेदाग्रहस्य सद्भावात्, रजते रजतभेदग्रहोपगमेऽन्यथाख्यातिप्रसङ्गात्, इत्याशयेन भेदाप्रतियोगित्वरूपं स्वातन्त्र्यमिष्टे, संसर्गाभावाऽप्रतियोगित्वरूपं च तदिष्टतावच्छेदके उपस्थितिमादाय विवक्षणीयम्। परन्त्वेवं भेदाप्रतियोगित्वादिना रूपेणोपस्थितिः सर्वत्रापेक्षणीयाऽऽपद्यत इति भेदप्रतियोगित्वादिनाऽनुपस्थितत्वस्य निवेश उचितश्चकास्ति, उपस्थितत्वं तु पृथग्वक्तव्यमेव । दोषाधीनज्ञानस्येत्यादि । घटाभाववदगृहीतासंसर्गकघटविशेष्यकज्ञानत्वेन घटाभाववति घटप्रकारकप्रवृत्तित्वावच्छिन्नं प्रति विशिष्य कारणता । प्रमाणैश्च मखण्डने सति तद्विशेष्यकतत्प्रकारकप्रवृत्तिं प्रति तद्विशेष्यकतत्प्रकारकज्ञानत्वेनैव कारणतेति नियमस्यानादरणीयत्वादिति भावः। लाघवाख्यतर्केति । भ्रान्तिवादिना सामान्यकारणता विशिष्टज्ञानत्वावच्छिन्ना, द्वितीया भ्रमत्वावच्छिन्ना, तृतीया तु प्रमात्वावच्छिन्ना कल्पनीयेति लाघवं शरीरे। असंसर्गाग्रहेणोपपत्तुमिति । शुक्तिरजतयोरसंसर्गाग्रहमात्रेणोपपत्तुमित्यर्थः। शुक्तेरजतत्वप्रकारताकविशेष्यतायाश्च तत्रसंसर्गाग्रहोऽस्त्येव, किन्तु संसर्गग्रहोऽपि ।

विशिष्टरूपेणेति । यद्यपि पुरोवर्तिसंसृष्टरजतरजतत्वान्यतरात्मकविशिष्टस्यैवासन्निकृष्टस्य भ्रमे भानाभ्युपगमो मूले स्वरसतोऽवगम्यते, तदंशे एव च भ्रमत्वम्, न तु विशेषणांशे तत्संसर्गांशे वा, तयोरन्यत्र सत्त्वात्, पुरोवर्तिनिष्ठतया तदंशे भ्रमत्वं तु विशिष्टांशे एवोक्तं भवति। दर्शितश्चायं स्वारसिकार्थो लक्षणप्रयोजनखण्डनशारदायाँ परतः पङ्क्तिमिमामेवोद्धृत्य प्रसङ्गात्, तथापि विशिष्टस्य भ्रमगोचरस्याप्रसिद्धतयाऽसन्निकृष्टे एव तत्र विषये भ्रमत्वाभिधानं न मनोज्ञम्, प्रसिद्धे एव सन्निकर्षस्यापेक्षणीयतयाऽप्रसिद्धे सन्निकर्षकारणताया अप्रसक्तत्वात्। न च संसर्गस्य भ्रमे भातस्यालीकत्वपक्षेऽनिर्वाच्यत्वपक्षे वा तद्घटितं विशिष्टं तत्समानयोगक्षेममास्ताम्, संसर्गस्य तथात्वानुपगमे हि भ्रमत्वं न सम्भवत्येवेति व्युत्पादितमुक्तस्थलीयशारदायामिति वाच्यम्, संसर्गिणोरनलीकत्वे संसर्गस्यालीकत्वं तयोः सत्यत्वे तस्य मिथ्यात्वं च नोपपद्यते इत्यस्य वक्तुं शक्यत्वेऽपि विशेष्यविशेषणयोर्वस्तुतः संसर्गासमानयोगक्षेमतामभ्युपेत्यैव विशिष्टघटनादशायां तयोरेव संसर्गसमानयोगक्षेमतेत्यभिधानस्य सर्वथैवाश्रद्धेयत्वात्, विशिष्टस्य च वस्तुगत्या विशेष्यविशेषणतत्संसर्गभिन्नत्वाभिन्नत्वाभ्यां दुर्निरूपत्वेऽपि तत्त्रितयस्यैव दशाविशेषे विशिष्टव्यवहारनिदानत्वमित्यस्यानुभवैकपक्षपातिनाऽवश्यमादरणीयत्वेन संसर्गविशेषेण विशेषणांशे एव भ्रमत्वस्य विशिष्टांशे भ्रमत्वमभिदधताऽप्यवश्यं पर्यवसायितया वाच्यत्वाच्चेत्याशयेनान्यथा व्याचष्टे विशेषणतयेत्यर्थ इति।

मयेति । नन्वनुपदमेव शारदायां परतो दर्शनीयरीत्या मयेत्यनेनानिर्वाच्यवादिपरामर्शोऽसम्भवेऽपि प्रकृतमूलकारात्मकव्यक्तिविशेषपरामर्शे का क्षतिः, प्रक्रियानानात्वेन प्रकारान्तरस्यैवानिर्वाच्यवादिनोऽपि मूलकारस्याभिप्रायगोचरत्वसम्भवात्, सदसत्त्वाभ्यामिवोत्पन्नत्वानुत्पन्नत्वाभ्यामपि दुर्वचतया विपर्ययगोचरस्य सर्वथैवानिर्वाच्यत्वे मूलकृत्सम्मतिसम्भवादिति चेन्न, एवं सति तस्य सन्निकृष्टत्वासन्निकृष्टत्वाभ्यामपि दुर्वचत्वस्यैव वाच्यत्वेनासन्निकर्षपक्षपक्षपातस्य मूलकृतः सर्वथैवानुचितत्वापातादित्यभिप्रायेणान्यथाव्याख्यानमेव ज्यायो मत्वाह अन्यथाख्यातिवादिनेति । अनिर्वचनीयोत्पत्तिवादे इति । अत्र कल्पेऽपि प्रातीतिकरजते

व्यावहारिकरजतार्थिप्रवृत्त्युपपत्तये सद्रजतत्वेन रूपेण तत्तादात्म्यभानस्यान्यथाख्यात्यात्मन उपगमस्यावश्यकत्वेन नोक्तार्थकस्य मयेत्यस्य सर्वथा निर्दलत्वम्।

मूलपृष्ठम् १५३—भ्रान्त्युत्पत्तिः परेषामिति। अत्र परत्वं यत्किञ्चिदपेक्षयाऽव्यवस्थितम्, अकिञ्चित्करं च तदुपादानम्, अतो हि यद्यस्ति तदा तदनभ्युपगन्तृमतेऽपि तेनोत्पत्तव्यमेवेति मतद्वयसाधारण्याय परत्वनिवेशमपास्यैवानुगमयति विपरीतव्यवहारेत्यादिना।

इति खण्डनशारदायामनुभूतित्वस्य जातित्वखण्डने राजहंसः।

## स्मृत्यन्यत्वखण्डनशारदायां राजहंसः।

मूलपृष्ठम् १५५—स्वनिरूपकानुयोगितानिरूपितनिरूपकतेति। अभावनिष्ठानुयोगितानिरूपितनिरूपकता प्रतियोगिन्येवात्र द्रष्टव्या न तु प्रतियोगिताव्यधिकरणावच्छेदकीभूतधर्माश्रये।

मूलपृष्ठम् १५६—प्रकारमुद्रयैवेति। स्मृतित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितानिरूपितावच्छेदकताश्रयावच्छेदकतात्वाश्रयनिरूपकत्वे सति तादृशपर्याप्तीयप्रतियोगितानिरूपितावच्छेदकताश्रयावच्छेदकतात्वाश्रयनिरूपकनिरूपकतानिरूपितानुयोगितानिरूपिका या प्रतियोगिता तन्निरूपकभेदवत्त्वं स्मृतिभिन्नत्वमित्यर्थः।

मूलपृष्ठम् १५८—व्यासज्यवृत्तिधर्मप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षहेतुतावादस्य फलबलेन सङ्कोचाभ्युपगमवादेनाह कथञ्चित्सम्भवे वेति।

मूलपृष्ठम् १५९—तदुभयसाधारणमपि नोक्तजनकतावच्छेदकमिति। प्रत्येकरूपेणापि योग्यताव्यवहारसद्भावादिति भावः।

मूलपृष्ठम् १६०—अपर्यवसानमवसेयमिति। स्वरूपसम्बन्धनिराकरणमधिकृत्याधिकं 'न तु रजतत्वमात्रे, तस्यान्यत्र सत्त्वा' दिति खण्डनपङ्क्तिशारदायां लक्षणप्रयोजनखण्डने निरूपितम्।

मूलपृष्ठम् १६१—पृथक् पदं वेति। विसर्गान्तमिति शेषः। तदुपपादकत्वस्येति। तथा सामानाधिकरण्यबुद्धिपरामर्शः। असम्भवापत्तेश्चेति। तद्रूपावच्छिन्ने तद्रूपावच्छिन्नस्य सामानाधिकरण्यबुद्धिं प्रति तद्रूपावच्छिन्ने तद्रूपावच्छिन्नप्रतियोगिताकभेदाभेदयोः प्रयोजकत्वं न तु किञ्चिद्रूपावच्छिन्ने किञ्चिद्रूपावच्छिन्नप्रतियोगिताकभेदाभेदयोः, मा भूद् घटः कलश इति धीरिति भावः। इति तु मन्तव्यमिति। अथ द्रव्यं घट इत्यादौ द्रव्यत्वेनैवाभेदस्य भानम्, घटत्वेनैव च भेदस्येति न वक्तुं शक्यते, भेदाभेदयोरुभयोरपि प्रतियोगितानुयोगितावच्छेदकरूपद्वयमादायैव भानौचित्यात्, केवलं प्रतियोगितावच्छेदकमनुयोगितावच्छेदकं वाऽऽदाय तयोर्भानस्य श्रद्धातुमयोग्यत्वादिति चेन्न, घटो न पट इत्यादौ भेदभानस्य तादृशधर्मद्वयमादाय दर्शनेऽपि नाऽभेदभानस्य क्वापि तथा दर्शनम्, नीलो घटो द्रव्यं घट इत्यादेः केवलाभेदविषयकत्वाभावेनानुदाहरणत्वात्, घटो न पट इत्यादावपि केवलस्यैव भेदस्य भानेन भेदाभेदयोर्मिलितयोर्भाने विलक्षणस्यैव कार्य-

कारणाभावस्य वक्तव्यत्वात्, अन्यथाऽन्यत्र केवलभेदस्य भानेनाभेदसहिष्णोस्तस्य भावमेव त्याज्यं स्यात्। एवं च द्रव्यं घट इत्यादौ द्रव्यसामान्यस्यैव भानेन पटादौ घटत्वेन रूपेण घटभेदस्य द्रव्यत्वेन रूपेण च तदभेदस्य भानमिति रीत्या तृतीयमन्तर्भाव्यैव भेदाभेदभाने प्राचां स्वरसवर्णनमात्रमत्र कृतम्। एतेन नीलो घट इत्यत्र गुणगुणिनोर्नीलत्वघटत्वाभ्यामेव भेदाभेदयोर्वाच्यतया प्रतीयमानयो रूपयोरन्यतररूपेण भेदस्यापरतररूपेण चाभेदस्य भानं कथं निर्वाह्यतामिति नाशङ्कनीयम्, तत्र घटसामान्यस्यैव भानेन पीतघटादौ घटत्वेनाभेदस्य नीलत्वेन च भेदस्य भानमिति सम्भवदुक्तिकत्वात्। यदि च प्रतीयमानभिन्नरूपद्वयेनैव भेदभानमभ्युपगमनीयम्, रूपभेदे रूपिभेदभानस्यानुभविकत्वादित्युच्यते, तदा ताभ्यामेव रूपाभ्यामभेदभानस्यानुभवविरोधेनानभ्युपगमे धर्मिमात्राश्रितोऽभेदो निरवच्छिन्नानुयोगिताप्रतियोगिताको भातु। दर्शितञ्चैतद्व्यभिचारखण्डनशारदायाम्। इति स्मृत्यन्यत्वखण्डनशारदायां राजहंसः।

## भेदसंसर्गाभावयोर्भेदखण्डनशारदायां राजहंसः।

मूलपृष्ठम् १६४—ननुल्लेखेन तस्येति। तस्य = अभावत्वस्य। भेदस्य प्रतियोगितावच्छेदकेन समं विरोधो नत्वत्यन्ताभावस्येत्याशयमूलां निरुक्तिमनुवदति अत्र स्वावच्छेदकताघटकसम्बन्धेत्यादिना। घटत्वावच्छेदेन घटात्यन्ताभावस्य स्वरूपसम्बन्धेन वर्तमानतया प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नघटत्वनिष्ठाधेयताकाधिकरणतावच्छेदकघटत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना घटात्यन्ताभावनिष्ठा वृत्तिः, तदवच्छेदकं घटात्यन्ताभावत्वरूपानुयोगितायाम्। घटभेदत्वरूपानुयोगिता तु नैवं शक्योपादातुम्, घटत्वावच्छेदेन घटभेदस्य स्वरूपसम्बन्धेनावृत्तेः, घटध्वंसत्वघटप्रागभावत्वरूपानुयोगितयोस्तु घटभेदत्वरूपानुयोगितातुल्ययोगक्षेमतैव, अतएव ध्वंसप्रागभावयोरतिव्याप्तिं वक्ष्यति। ननु सत्यपि घटत्ववत्ताग्रहे स्वरूपसम्बन्धेन घटात्यन्ताभावबोधोद्भवेन कथं तस्य विरोधितावच्छेदकसम्बन्धतेतिचेद्, घटत्वात्यन्ताभावस्थलीयस्वरूपसम्बन्धस्य तथात्वात्। अपि वा स्वरूपसम्बन्धस्याननुगततया घटात्यन्ताभावीयस्वरूपसम्बन्धस्य विरोधितावच्छेदकत्वाभावेनायमपि दोषोऽत्रानुसन्धेय एव। शाखावच्छिन्नेति। तादृशाधिकरणतावच्छेदकीभूतशाखावच्छिन्नेत्यर्थः।

मूलपृष्ठम् १६५ स्वाधिकरणेति। प्रथमसम्बन्धतयेत्यादिः। अव्याप्तिवारणायेति कपिसंयोगिभेदेऽप्यव्याप्तिवारणायेत्यपि द्रष्टव्यम्।

मूलपृष्ठम् १६६—संसर्गानवस्थेत्यादिमूले संसर्गानवस्थाप्रसङ्गे बीजप्रदर्शनार्थं शेषांशादादित्यादिकमलीकत्वापत्तिपरतया पूर्वमेव व्याचष्टे किञ्चैवमविशेषितेत्यादिना। तादात्म्येन घटस्य घटभेदाभावेन समनियततया तस्य तदात्मकतासम्भवमभ्युपेत्याह कथञ्चि

---

१—इतोऽग्रेऽत्र पृष्ठे शारदायां तादृशसत्त्वाघटोभयाभावादिकमतिप्रसङ्गाच्चेत्यत्र तादृशसत्त्वाघटोभयाभावादिकमादायातिप्रसङ्गाच्चेति पाठो द्रष्टव्यः।

त्सम्भवेऽपीति। अप्रसिद्धिरेवेति। अव्यावर्तकत्वादिति भावः। व्यधिकरणधर्मावच्छिन्नाभावस्य केनाप्यविरोधादाह समानाधिकरणधर्मेति। स्वनिरूपकाभावस्येति। स्वं प्रतियोगिता। निरूपकतावच्छेत्यत्र निरूपकताऽभावनिष्ठानुयोगितानिरूपिता प्रतियोगिनि द्रष्टव्या। तदवच्छेदकश्च प्रतियोगिनि प्रकारतया भासमानो धर्मो न तु प्रतियोगिताव्यधिकरणः।

मूलपृष्ठम् १६७—सामानाधिकरण्यसम्बन्धावच्छिन्नेति। उक्तनिरूपकताऽवच्छेदकस्याधेयतारूपनिरूपकतावच्छेदके सामानाधिकरण्येन सम्बद्धतया तादृशनिरूपकतावच्छेदकतावच्छेदकता सामानाधिकरण्यसम्बन्धावच्छिन्ना। वह्नित्वेन महानसीयो वह्निर्नास्तीत्यभावस्य वह्नित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतया समं विरोधपरिहाराय चायं सम्बन्धः, महानसीयवह्नित्वस्य प्रतियोगितानिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतापर्याप्त्यधिकरणस्य सामानाधिकरण्येन वह्नित्वे सत्त्वेऽपि महानसीयवह्नित्वविशिष्टवह्नित्ववत्त्वान् पर्वत इत्यप्रतीतेः पर्वतनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकतावच्छेदकता न सामानाधिकरण्यसम्बन्धावच्छिन्ना महानसीयवह्नित्वे। वस्तुतस्तु वह्नित्वावच्छिन्नाया महानसीयवह्नित्वावच्छिन्नाया वाऽऽधेयतायाः प्रसिद्धावपि महानसीयवह्नित्वविशिष्टवह्नित्वावच्छिन्नाधेयताया अप्रसिद्धिरेव, तत्कल्पने प्रयोजनाभावात्। एवं सामानाधिकरण्येन घटत्वविशिष्टघटत्वावच्छिन्नाधेयताया अप्यप्रसिद्धिरिति कथं लक्षणसमन्वयः। वह्नित्वेन वह्निधूमोभयाभावस्य वह्नित्वावच्छिन्नाधेयतानिरूपिताधिकरणतया समं विरोधव्युदासाय द्वितीयः सम्बन्धः, वह्निधूमोभयत्वस्य वह्नित्वे सामानाधिकरण्येन सत्त्वेन परीत्या प्रथमसम्बन्धसमन्वयसम्भवेऽपि वह्निधूमोभयं वह्निरित्यप्रतीते द्वितीयसम्बन्धसमन्वयानुपपत्तेः।

इति ध्येयमिति। अत्र स्वावच्छेदकतापर्याप्त्यधिकरणधर्माभिन्ननिष्ठत्वोक्त्यापि न निस्तारः, घटत्वत्वाद्यावच्छिन्ने घटत्वत्वाद्यवच्छिन्नाभेदस्यापि प्रतिपादनाशक्यतया वक्ष्यमाणत्वात्। कपिसंयोगाभावस्य कपिसंयोगत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतया समं विरोधो मा भूदित्यवच्छेदकविशेषस्य निवेशे न घटत्वाद्यभावसाधारण्यसम्भव इत्यपि द्रष्टव्यम्।

एवञ्चाविशेषितत्वमपीति। अविशेषितसंसर्गतादात्म्ययोर्निषेधपक्षस्यैवोपक्रान्तत्वादिदम्। प्रतियोग्यविशेषितादीति। आदिना प्रतियोगिविशेषितोपादानम्। न क्वापि निषेध इति। आरोप्य हि निषेधः, देशविशेषगततयाऽऽरोपविषयस्य च प्रतियोगिनोऽलीकत्वम्, न तु देशान्तरगतत्वमिति भावः। अयमेतस्य प्रकृतोपयुक्तार्थ इति। यद्ययं श्लोकोऽस्माभिर्निर्मीयेत तदाऽस्यायमर्थः स्यादिति भावः। एवञ्चास्य भट्टपादैः पारमार्थिकसांवृतेतिसत्यद्वैविध्यनिराकरणाभिप्रायेण निमितत्वेऽपि न क्षतिरिति तात्पर्यम्। इति वेति। सत्यात्मनोऽसङ्गतया तत्र हेतो र्नास्ति सम्बन्ध इति तु स्वप्रकाशवादेऽवादिष्म शारदायाम्।

मूलपृष्ठम् १६८—न सम्भवतीत्यर्थ इति। मूले नियमनभङ्गादिति स्वीकारासम्भवादित्यर्थकमितिभावः। रोचयन्ति केचिदिति। अत्र नियमनभङ्गे हेत्वलाभेन न्यूनत्वमरुचि-

बीजम्, अव्यवहितप्राकृतनतथाप्रमाशब्देनानुयोगिनि प्रतियोग्याधारताप्रमायाः परामृष्टतयाऽत्रापि तदुपस्थितेश्च, 'तथा न प्रमीयमाणत्व' मित्यग्रे तु साहित्यप्रमोपादानमगत्या। निरुक्तविरोधस्येति। सहभावाभावशब्दव्याख्यानेऽभावगतो विरोधः प्रतियोगिनिरूपितो निरुक्तः पुरा। यदभावेति कर्मधारयः। तेन सम्बन्धेनेत्यादि। तदभाववन्निरूपितायास्तत्सम्बन्धावच्छिन्नसम्बन्धिताया विरहस्येत्यर्थः। अभाववत्ता तु विशेषणताविशेषावच्छिन्ना। कथञ्चित्तद्वारणेऽपीति। सत्तादौ तु स्वाधिकरणेत्यादिनाऽनुपदं तद्वारणप्रकारो वक्ष्यते। असद्वादी हि कात्यायन इति। इदं शबरस्वामिवचः। मूले नञः प्रमीयमाणपदेनान्वयानन्तरं भावप्रत्यये प्रमीयमाणभिन्नत्वप्रतीत्याऽर्थात् प्रमीयमाणत्वात्यन्ताभावः प्रतीयते न तु भूतले घटो नास्तीत्यादाविव क्रियान्वयानुसन्धानापेक्षा तत्प्रतीतिः, यतः प्रसज्यप्रतिषेधविषयोऽयं स्यात्, क्रियान्वयानुसन्धानं विनापि भवत्यत्यन्ताभावस्य धीरसन्देहानुपलब्ध्यादिशब्देषु क्वचिदेव न तु सर्वत्र। एवमेव 'न विरुद्धतां हेतुदोषत्वासम्भवा' दिति हेत्वाभासप्रकरणमूले विरोधकर्तृभिन्नत्वप्रतीत्यैवार्थाद्विरोधात्यन्ताभावप्रतीतिरिति पर्युदासविषय एवायम्, तत्र च नित्यःसमास इति समर्थसूत्रे 'महाविभाषासूत्रमनर्थकम्, समासव्यासयोभिन्नार्थतया व्यासप्रतिपाद्यार्थे समासप्राप्तिरेव नास्ति, समासाप्रतिपाद्यार्थे एव तु व्यासस्य स्वभावतः प्राप्तिरिति प्रयोगद्वयस्य व्यासस‌मासात्मनः सिद्धि' रित्याशयेन 'वावचनमनर्थकं स्वभावसिद्धत्वा'दिति वदता कात्यायनेन सूचितम्, भिन्नार्थत्वं पुनरुद्देश्यविधेयभावापन्नसखण्डार्थबोधकत्वं व्यासस्य, तदनापन्नाखण्डार्थबोधकत्वं समासस्येति रीत्या वाऽन्यथा वा कथञ्चिदित्यन्यत्। व्यक्तिविवेकेऽपीदृशस्थले समासस्यौचित्यमेवादृतम्।

'ननु साधुकृतं प्रजासृजा शशिकान्तेषु मनो न कुर्वता।
नहि चेतनतामवाप्य ते विरमेयुर्गलितेन केवलम्॥'

इत्यत्र न कुर्वतेति समासाकरणं व्यामोहमूलकमिति तत्रोक्तेः। इत एवारुचे 'र्नञ्कारेणैव वा समास' इति शारदायामुक्तम्। मीमांसकैस्तु 'यजतिषु येयजामहं करोति नानुयाजेषु' इत्यत्रापि प्राप्तबाधमसहमानैर्भाष्यस्वरसमभिभूयैव पर्युदाससमर्थनेन कात्यायनस्यासद्वादित्वमुदितम्, तदनुसारेण च मूलमिदं योजितम्।

तथा न प्रमीयमाणत्वमित्यत्र मूले यद्यपि घटाभाववृत्तित्वप्रकारकप्रमितेरव्यवहितमुपक्रान्तायाः परामर्शो युज्यत इति तादृशप्रमित्यविषयत्वमर्थः स्यात्, अनुयोगिनि प्रतियोग्याधारतासम्भावनावारणाय प्रतियोगिनि तादृशप्रमित्यविषयत्वस्वभावताकल्पनेन प्रत्यवस्थानस्य सुघुमालिङ्गितत्वात्, पटादावतिप्रसङ्गसत्त्वेऽपि तस्य मूलकृतैव 'अतिप्रसङ्गा' दित्यनेन प्रदर्शनसम्भवात्, तथापि नियमेनेत्याद्युत्तरग्रन्थस्य नात्र पक्षे कथमपि योजनसम्भवः, स्वभावत एव तादृशप्रमित्यविषयत्वमित्यत्र पूर्वपक्षितात्पर्यपर्यवसानेन प्रतियोग्यनुयोगिभावलक्षणस्य स्वभावतो विरोधस्यापि स्वीकारप्राप्त्या च क्व प्रत्यवस्थानसुघुमापीत्याशयेनान्यथाव्याख्यातुमुपक्रमते घटाभाववृत्तित्वप्रकारकेत्यादिना। विशेष्यदलमेवेति। यद्यप्यत्र पक्षेऽपि प्रतियोग्याधारतासम्भवनाऽनुयोगिन्यस्त्येवेति पूर्वपक्षोत्थानमनवसरपराहतम्, तथापि 'प्रतियोग्यनुयोगिभावादन्यः कस्तयोर्विरोधः स्या' दित्यस्योत्तरदायित्वाभिमानेनाशङ्कामात्रमिदम्। घटाभावसमानाधिकरणत्वाभावस्य लक्षणान्तरत्वेऽपि यथासन्निवेशं व

वैयर्थ्यम्। ननु यदीदृशपूर्वपक्षे चक्रसम्भावनाऽस्त्येव, तदा तस्य तथैव पूर्ववन्निराकरणं कुतो नाद्रियत इति चेन्न, 'वस्तुतस्त्वनुभवबलादेवे' त्यादिना शारदायां प्रतिविहितत्वात्। अतएव मूलकारोऽपि दूषणान्तरमेवातिप्रसङ्गादित्यनेनाभ्यधात्। प्रमित्यविषयाभावकत्वादिकमेवेति। समवायसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन सत्ताभावविन्निष्ठाधिकरणतानिरूपितवृत्तित्वाभावः समवायसम्बन्धावच्छिन्नवृत्तित्वनिष्ठप्रकारताकप्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धेन सत्ताऽभाववन्निष्ठाधिकरणतानिरूपितवृत्तित्वनिष्ठप्रकारताकप्रमीयविशेष्यताविरहश्चादिपदार्थतया ग्राह्यौ।

मूलपृष्ठम् १६९—रीतिरुक्तैवेति। नियमेनेत्यादिप्रतीकस्थशारदादर्शितदिशा शङ्कासमाधाने अनुवदनीये इति भावः। एवञ्चेति। स्वरूपसम्बन्धविशेषरूपतायां पर्यवसाने चेत्यर्थः।

मूलपृष्ठम् १७०—सर्वं हि वस्तु स्वरूपपररूपाभ्यां सदसदात्मना द्विविधमिति। ननु पररूपेणासत्त्वं यदि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताके व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताके चाभावे पर्यवस्येत्, तदा तार्किकादिभिरपि भावाभावयोः सर्वत्र सामानाधिकरण्यमभ्युपगतमिति मतविशेषानुसरणं व्यर्थम्, यदि तु घटस्य पररूपेणासत्त्वं घटात्मकत्वमेवेति तात्पर्य्यम्, तदा घटविरहवति पटत्वाद्यवच्छिन्नप्रतियोगिताकघटाभावस्यासत्त्वप्रसञ्जकत्वेन भाट्टादिमतस्यातितुच्छतया तदादाय प्रत्यवस्थानमनवकाशम्, यदि तु पररूपेणासत्त्वं नाम घटादौ परकीयतादात्म्याभावस्तदापि सिद्धसाधनमेवेति चेत्प्रथमपक्षस्यैव विवक्षितत्वात्। यथा च तार्किकादीनां तादृशाभावे न सम्प्रतिपत्तिस्तथानुमानखण्डनशारदायां दर्शितत्वात्। किञ्च द्वितीयकल्पेऽपि पररूपेणासत्त्वस्य घटेन भेदाभेद एव न तु सर्वथैव घटात्मकत्वमिति घटत्वेन घटाभाववत्यपि भूतलादौ पटत्वाद्यवच्छिन्नप्रतियोगिताकघटाभावस्य घटभिन्नाभिन्नात्मनः सद्भावसम्भवः।

विरोधान्तरव्याप्यत्वमिति। विरोधान्तरं = सहानवस्थानम्। न विशेषितनिषेधपक्षेऽपि निस्तार इति। निस्तारः = घटस्यसदातनत्वाद्यापत्तिपरिहारः।

मूलपृष्ठम् १७२—भेदसामानाधिकरण्योपलक्षितेति। भेदो भेद इत्यत्र तु तादात्म्यं परं भायात्, न तु भेदसमानाधिकरणं तत्, रूपभेदाभावात्, एवमपि भेदावगाहने तु न परमज्ञातविषयकत्वाभावप्रयुक्तमप्रमात्वमपि तु बाधितविषयकत्वप्रयुक्तमपि। किञ्च भेदत्वोपहितव्यक्तिमात्रे भेदत्वावगाहनस्य भेद इत्येवानवच्छिन्नविशेष्यताकधिया सम्भवः, भेदत्वविशिष्टे तदवगाहनं तु भेदो भेद इति धीः कुर्यात्, तत्र च विशेषणस्य प्रकृतविधेयान्वयित्वन्यायेन भेदत्वेऽपि भेदत्वस्य भानेन बाधितविषयकत्वं निर्बाधम्। स्वयमपि च केनापीति जनेनेति शेषः।

मूलपृष्ठम् १७३—भेदत्वासमनियतधर्मेणेति। यद्यपि भेदत्वभिन्नेनेत्येतावदेव वक्तुमुचितम्, तच्च भेदत्वसमनियतं वा तदसमनियतं वेत्यन्यत्, तथापि तत्समनियतधर्मस्य "कः प्रमेयः" इत्यनेन मूले आक्षिप्तस्य टीकायामनुपदमपाकृततया पारिशेष्यमनुरुध्यसमनियतेत्युक्तम्। उक्तरीत्येति। यद्यप्यन्योन्याभावस्य प्रतियोगित्वे इत्यादिनोक्तरीत्येत्यर्थः।

मूलपृष्ठम् १७४—यदाहुरिति । पक्षतायां जगदीशा इति शेषः । भावात्मकतादाम्याभावानात्मकस्येति । भावे भावप्रतियोगिकाभावानात्मके भावत्वाव्याहतावपि संसर्गाभावे तद्व्याहतिरिति भावः । एवञ्च षष्ठ्यन्तमिदं भावात्मकतायां हेतुर्न तु व्याहताविति ध्येयम् । अन्यथा भेदान्तरे इति । भेदान्तरे = यावत्त्वानवच्छिन्नप्रतियोगिताकभेदमात्रे ।

मूलपृष्ठम् १७६—विशेष्यसङ्गतैवकारस्थलीयनियममनुसृत्याह शङ्खे पाण्डरत्वमेवेत्यत्रेति । भावसामानाधिकरण्यनिषेधेति मूलं प्रतियोगिवैयधिकरण्यार्थं किमित्याशयेनाह यद्वेति ।

मूलपृष्ठम् १७७—दोषतादवस्थ्यादिति । ज्ञानविशेषपदेन स्मृतेरपि ग्रहणसम्भवात् अवश्यमिति । प्रतियोगित्वाभावे इति शेषः । इतिच्छेद इति । तृतीयान्तत्वभ्रममपाकर्तुमिदम् । इति भेदसंसर्गाभावयो र्भेदखण्डनशारदायां राजहंसः ।

## स्मृतित्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् १८०—अव्यापकतामावहन्तीति । उभयाभावादिकमादायेदं द्रष्टव्यम्, विषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकताविवक्षामाश्रित्याह कथञ्चित्तत्परिहारोऽपीति ।

मूलपृष्ठम् १८२—तस्य सम्भवादिति दिगिति । न च घटानुभवे स्वकालावच्छिन्नविषयावगाहिनि सति तद्विषयताव्यापकविषयताकत्वं न घटपटसमूहालम्बनेऽपीति वाच्यम्, तादृशकालस्याप्युपनयबलात्कदाचिदुक्तसमूहालम्बनविषयतोपपत्तेः, घट इति शब्दमात्राद्युक्तघटानुभवस्यापि स्वकालावच्छिन्नविषयावगाहित्वमित्यस्याप्रामाणिकत्वाच्च । न च तथापि घटावच्छेदेन ज्ञाततयोः सामानाधिकरण्यमप्यस्त्येवेति देश्यम्, स्वयावदधिकरणावच्छेदेन स्वसामानाधिकरण्यस्य स्वव्यापकत्वपर्यवसन्नस्य विवक्षितत्वात् । तदिदमाह दिगिति । इति स्मृतित्वखण्डनशारदायां राजहंसः ।

## तत्त्वानुभवत्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् १८३—उक्तज्ञानस्य च संशयानात्मकत्वादिति । एवञ्च कृष्यादौ यदि सकम्पैव प्रवृत्तिः प्रामाणिकी तर्हि साऽऽहार्याख्यविलक्षणनिश्चयादेव निर्वाह्यतामिमि भावः । वस्तु ः कदाप्यनुदयादिति । ननु योगिभिन्नानां तादृशानुव्यवसायस्य लौकिकप्रत्यक्षस्थले एवोदयेन तदभावेन लौकिकप्रत्यक्षत्वं माऽस्तु प्रकृतज्ञानस्य, अलौकिकमानसप्रत्यक्षत्वं तु केन वार्यते, याथार्थ्यत्वादृष्टविशेषवशादेवेत्यगत्योपगन्तव्यमिति चेन्न, तादृशानुव्यवसायसद्भावस्थले एव प्रत्यक्षत्वस्य लौकिकव्यवहारानुरोधिसिद्धिकतया तदसद्भावस्थलेऽपि प्रत्यक्षत्वाभ्युपगमस्य परिभाषामा-

न्नत्वात्, न च योगिनामिवात्र स्फुटावभासोऽपि, तस्मात्क्लृप्तप्रमातिरेकित्वमेव तादृशज्ञानस्य पर्यवस्यति, तच्चाग्रे शारदायामाशङ्कितमेवेत्यदोषः।

मूलपृष्ठम् १८५— यथाश्रुते नासङ्गतिरिति। प्रामाण्यस्यैव स्वीकारे लक्ष्यत्वेनातिव्याप्त्यसम्भवादिति भावः।

मूलपृष्ठम् १८६—अन्यथा स्मृतिव्यावृत्तये इति। अन्यथा = स्मृतौ ज्ञातविषयकत्वप्रयुक्त एव प्रमात्वविरह इत्यनभ्युपगमे। इति तत्त्वानुभवत्वखण्डनशारदायां राजहंसः।

## याथार्थ्यखण्डनशारदायां राजहंसः।

मूलपृष्ठम् १९१—विस्तरस्तु प्रथतामिति। संयोगपरत्वप्रयुक्तगुरुत्वस्य 'प्रह्वे वा' इति पिङ्गलोक्तोऽपवादोऽत्र स्मर्तव्यः।

मूलपृष्ठम् १९२-वक्ष्यते चाधिकमिति। 'न तु रजतत्वमात्रे, तस्यान्यत्र सत्त्वा' दिति लक्षणप्रयोजनखण्डनपङ्क्तिस्थशारदायामिति शेषः।

मूलपृष्ठम् १९३—विशिष्टसत्तावान् गुण इति ज्ञानस्य च प्रमात्वं स्यादिति। न च गुणनिष्ठाधिकरणतानिरूपकता प्रकारतानवच्छेदककेवलसत्तात्वावच्छिन्नैवेति कथं चतुर्थसम्बन्धसमन्वय इति शङ्क्यम्, वैशिष्ट्यसत्तात्वयोर्द्वयोरेव प्रकारताऽवच्छेदकतया तदनवच्छेदकताया उदासीने घटत्वादावेव सत्तया तदनवच्छिन्नत्वमादाय चतुर्थसम्बन्धसमन्वयोपपत्तेरित्याशयात्।

मूलपृष्ठम् १९४—अगृहीतासंसर्गकेतीति। एकत्वविशेषणं तु विसंवादिप्रवृत्तिजनकस्य मतभेदेनैकज्ञानस्य ज्ञानद्वयस्य वेदानीं सङ्ग्राह्यत्वेऽपि मिलितज्ञानद्वये प्रमात्वव्यवहारापहाराय, प्रत्येकमेव तद्व्यवहारात्, अन्यथा तु त्याज्यमेव तत्, नायं घट इत्यस्यापि च सामान्यतो लक्ष्यतयाऽगृहीतासंसर्गकेत्यपि त्याज्यमेव, एवं च धर्मधर्मिविषयकज्ञानत्वं शिष्यते, तत्र ज्ञानत्वस्य मूले उपात्ततया आदिपदार्थः सविषयकत्वास्मैव पर्यवस्यति, धर्मधर्मिनिवेशस्य निष्प्रयोजनत्वादित्याशयेन सविषयकत्वमन्ते आदिपदार्थतयोदीरितम्।

मूलपृष्ठम् १९५—वैलक्षण्याविषयकत्वेऽपि न क्षतिरिति। वैलक्षण्यपदेन व्यावृत्तिमनुपादाय दीर्घत्वादेरेव वैधर्म्यात्मनो ग्रहणे यथाश्रुतोक्तमूलसङ्गतावपि 'दीर्घत्वादेर्दण्डादिद्वारा' इत्युत्तरमूले 'तस्य दण्डादिद्वारा' इत्यनभिधानेन स्वरसतो वैलक्षण्यस्य वैधर्म्यानात्मकताध्वननात्, अन्यथोपक्रान्तस्य सर्वनाम्नैव परामर्शौचित्यादित्याशयेन व्यावृत्तिरेव वैलक्षण्यपदेनोपात्ता। ज्ञानघटितेनैवेति। ननु ज्ञानधर्मस्य विशेषणत्वस्थले ज्ञानघटितसम्बन्धोऽस्तु, अन्यत्रैव तदघटितसम्बन्धस्यादरणीयत्वादित्यरुचेराह एवं घटत्वस्येति। घटत्वेन साक्षात्कृतोऽयमिति। न चात्र स्वप्रकारकसाक्षात्कारविषयत्वं न संसर्गः, अपि तु प्रकार एव, घटत्वप्रकारकत्वस्य साक्षात्कारे तद्विषयत्वस्य चेदम्पदार्थे तत्रानुभूयमानत्वादिति वाच्यम्, एकत्र द्वयमिति रीत्या घटत्वस्योक्तसंसर्गेणेदम्पदार्थे तत्र भानोपपत्तेः। तादृशसम्बन्धेन घटत्ववानयमिति च ज्ञानं शक्यमत्रोपलक्षयितुम्।

मूलपृष्ठम् १६६—रूपानवच्छिन्नप्रकारकताकेति । प्रकारोऽत्र रूपम्, एवं च स्वरूपतो घटत्वादिप्रकारताकप्रमितिर्ग्राह्या । इति याथार्थ्यखण्डनशारदायां राजहंसः ।

## सम्यक्त्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् १६७—नवैवं प्रकारांश इति । तादात्म्येन विशेष्यसम्बन्धिनो विशेष्यस्यापि प्रथमयत्पदेन ग्रहणार्हत्वादिति भावः । चोदक्षमा स्यादिति । अनवच्छिन्नप्रकारताकप्रमित्यव्याप्तिवारणाय वृत्तित्वानवच्छेदकानवच्छिन्नप्रकारताकत्वपर्यन्तमवश्यं धावनीयत्वादनवच्छिन्नप्रकारताकभ्रमेऽतिव्याप्तिरिति भावः । भ्रमत्वव्यापकप्रतिबध्यतेति । सामान्यतः शुक्तिविशेष्यकभ्रमत्वं नाम शुक्तिविशेष्यकशुक्त्यवृत्तिप्रकारकज्ञानत्वम्, एवं च शुक्तिविशेष्यकपटखण्डादिभ्रमप्रतिबन्धकतावच्छेदकविषयताश्रयत्वस्य रजतत्वाद्यावपि सत्त्वेन तस्यापि शुक्तिविशेषत्वप्रसङ्ग इति भ्रमत्वव्यापकत्वं प्रतिबध्यतायां वक्तव्यम्, तथा सति शुक्तिविशेष्यकरजतादिभ्रमं प्रति रजतत्वप्रकारकग्रहस्याप्रतिबन्धकत्वाददोष इति । असम्भव इति । आहार्यसंशयाप्रामाण्यज्ञानास्कन्दिताव्याप्यवृत्तित्वज्ञानास्कन्दितज्ञानीयविषयतानां प्रबन्धकतातिरिक्तवृत्तित्वादिति भावः । क्रमेण ता व्यावर्तयन्नाह इच्छाप्रयोज्यत्वाभावेनेत्यादि । यद्रूपावच्छिन्नविषयतात्वव्यापकमिति । यद्यपि पूर्वकल्पे प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मस्य रजतत्वाद्यभावव्याप्यत्वस्य सम्भवेन तद्वत्त्वमादाय शुक्तित्वादौ विशेषत्वं सम्भाव्यते तथापि तेनैव रूपेणैवं शुक्तित्वादेर्विशेषता स्यान्न तु स्वरूपेण शुक्तित्वत्वेन वा, अत्र कल्पे तु यद्रूपपदेव शुक्तित्वं शुक्तित्वत्वं चोभयमपि शक्यमुपादातुम्, तत्र शुक्तित्वावच्छिन्नस्य समवायेन शुक्तित्वावच्छिन्नस्य तु तादात्म्येन शुक्तिविशेषत्वम्, यदा कदाचिच्छुक्तित्वे रजतत्वाद्यभावव्याप्यत्वं गृह्यते तदा व्याप्यतावच्छेदकतया शुक्तित्वत्वस्य भानमपेक्ष्यत एव, शुक्तौ तादात्म्येन रजतत्वाद्यभावव्याप्यत्वस्य रजतत्वादिमदवृत्तित्वरूपस्य रजतादिभिन्नत्वपर्यवसन्नस्य ग्रहणे पुनः स्वरूपेणैव शुक्तित्वभानेन निर्वाहः । परन्तु स्वरूपसम्बन्धरूपावच्छेदकताकल्पे विशेषताव्यवहारार्थं तादृशव्याप्यत्वज्ञानं नोपासनीयमित्यन्यत् । ननु तथापि पटखण्डत्वकाचत्वादेरपि शुक्तिविशेषत्वं प्रसज्यत एव, रजतत्वाद्यभावव्याप्यत्वेन तस्य ग्रहणे शुक्तौ रजतत्वादिभ्रमस्य प्रतिबन्धात्तदीयविषयताया अपि स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकताश्रयत्वादिति चेन्न, तद्रूपावच्छिन्नस्य तन्निष्ठस्य सततस्तद्विशेषत्वे तात्पर्यात् । एतदेव चाग्रे वाग्भङ्ग्यन्तरेण 'अत्र यद्यपि' इत्यादिनाऽऽशङ्क्य टीकायां निराकृतम्, प्रमात्वविवेचनमन्तरेण तन्निष्ठत्वस्य दुर्विवेचत्वात् । तत्प्रकारकग्रहेति । तदा शुक्तिगतो धर्मः परामर्शनीयः । शुक्तिविशेष्यकतत्प्रकारकग्रहस्तद्वद्विशेष्यक इत्याकारकप्रमात्वग्रहनिरूपितजनकत्वं शुक्तिविशेष्यकतत्प्रकारकग्रहस्तद्व्याप्यवन्निष्ठविशेष्यतानिरूपक इति ग्रहगतमित्यवगत्य परिष्कारो योजनीयः ।

१६८—साच व्यभिचरितेति । सा = विशेषनिश्चयत्वेन प्रतिबन्धकता ।

मूलपृष्ठे १६९—इच्छाविशिष्टज्ञानान्यत्वमिति । यद्यपि परैरुक्तसम्बन्धद्वयेनेच्छा

विशिष्टप्रत्यक्षस्यैवाहार्यत्वमुपेयते, तथापि प्रकृते तदन्यत्वस्यानाहार्यतात्मकताया उक्तौ शाब्दे प्रत्यक्षत्वविरहेणैवानाहार्यत्वसौलभ्यं मा भूदित्याशयेन ज्ञानत्वेन निवेशः, आवश्यकश्चैवं निवेशः शाब्दबोधस्याहार्यत्ववादिनये । भद्रेत्येव वरमिति । मनाक्प्रिये वरशब्दस्य क्लीबत्वनियमेऽपि भद्राशब्देन गतार्थत्वपरिहाराय वाक्यार्थपरामर्शार्थमितिशब्दमध्याहृत्य व्याख्यातम् । तादृशभ्रमाप्रकारत्वादेश्चेति । प्रामाणिकत्वमादिशब्दार्थः । पुरोवर्तित्वस्यापि तथात्वेनेति । इदं रजतमिति ज्ञानस्य रजतत्वविषयकत्वावच्छेदेन हि भ्रमत्वं न तु पुरोवर्तित्वविषयकत्वावच्छेदेनेति भावः । नाननुगमान्योन्याश्रयादिकमिति । प्रमात्वनिरूपणं विना कस्यचित्कचिद्वैशिष्ट्याप्रसिद्धेरन्योन्याश्रयः ।

मूलपृष्ठम् २०० – अत एव न स्वनिष्ठप्रकारताकेत्यादि । वृत्तित्वमत्र सम्बन्धित्वमेव तादात्म्यस्थलसाधारण्याय, एवं च फलादिगतविशेषस्य निर्वाच्यत्वे फलादिप्रकारिकां तद्विशेष्यिकां च प्रतीतिमादायैव तीरादिगतविशेषस्य निर्वाच्यत्वे तीरादिप्रकारिकां तद्विशेष्यिकां च प्रतीतिमादायापि क्रमेण कल्पद्वयसमन्वयसम्भवः ।

मूलपृष्ठम् २०१—भवत एव शास्त्रे इत्येवकारस्य व्युत्क्रमेणानुमतत्वादेवेत्यन्वयः ।

## इति सम्यक्त्वखण्डनशारदायां राजहंसः ।

## अविसंवादित्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् २०३—विस्तरस्तु पुरेरित इति । पुरा = अनुभवत्वस्य जातित्वखण्डने 'वस्तुप्रकाशिनि च दोषत्ववाचोयुक्त्यनिरुक्ते' रिति प्रघट्टकशारदायाम् ।

मूलपृष्ठम् २०५—मूले 'प्रमाणमविसंवादिज्ञान' मित्यादि प्रमाणवार्तिके धर्मकीर्तिवाक्यम् । पुरोवर्तित्वादेर्ज्ञानातिरिक्तकार्यकारणतानवच्छेदकत्वेनेति । पुरोवर्तित्वस्यानुगतधर्मस्थानीयापोहरूपत्वेऽतिप्रसक्ततया न घटादिनिष्ठकारणतायामवच्छेदकत्वम्, अननुगतत्वे तु स्वलक्षणमात्रात्मकतया न स्वलक्षणनिष्ठकारणतावच्छेदकत्वसम्भवः, नहि तेनैव तन्निष्ठकारणताऽवच्छिद्यते । ज्ञानं प्रत्यालम्बनविधया पुरोवर्तिनः कारणत्वे तु तदात्मकपुरोवर्तित्वस्य तन्निष्ठकारणतावच्छेदकत्वानुपपत्तावपि सामान्यस्थानीयापोहरूपपुरोवर्तित्वस्य स्वावच्छिन्नविषयताकज्ञाने आलम्बनविधया कारणतावच्छेदकत्वसम्भव इति भावः ।

मूलपृष्ठम् २०६ सफलप्रवृत्तिजनकत्वमिति । प्रवृत्तिरत्र यत्नमात्रम्, तेनानिष्टसाधनज्ञाने नाव्याप्तिः, यत्नजनकत्वं च ज्ञाने इच्छादिद्वारकम् । सकर्मकस्यासम्भवादिति । अवहितोऽस्मीत्यादिबहुलप्रयोगस्तु 'अर्श आद्य' जन्ततामादाय । नदी वहतीत्यादिवत्कर्मणोऽविवक्षया वा सकर्मकस्यापि समर्थनीय ईदृशः प्रयोगः ।

विस्तरेणेति । दर्शनसर्वस्वे विस्तरो दर्शित एव । इत्यविसंवादित्वखण्डनशारदायां राजहंसः ।

## अबाधितत्वादिखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् २०७—चिन्तामणिटीकायां मथुरानाथोक्तं किञ्चिदालम्ब्य स्वाभिप्रेतमेवोपपादयति केचित्तु एकस्यैवेत्यादिना। अन्तरपदं प्रमात्वापेक्षयेति । एवं च घटान्तरशब्दप्रयोगे भेदप्रतियोग्यनुयोगिनो र्घटत्वप्रतीतिवच्चिह्नान्तरशब्दप्रयोगे तयोश्चिह्नत्वप्रतीत्या प्रमात्वसाधारणं चिह्नत्वं यद्यपि लक्षणस्वरूपमेव स्यात् , तथापि जातिग्राहकप्रमाणसहकारिताया व्यञ्जके प्रसिद्धतया चिह्नशब्दस्य व्यञ्जकपरतयौचित्याद् व्याख्यानमादृतम्। वस्तुतस्त्वेवं मूले सम्पातायात एवान्तरशब्दः पर्यवस्यति। ननु चिह्नानां नानात्वेन तेषु केन जातिकल्पना प्रतिक्षेप्येत्यत्र विनिगमकालाभेन जातिरप्युपेयेत इत्याशङ्क्याह मूले तेषामिति। अनुगतत्वेनाननुगतत्वेन वाऽभिमतानामिति शेषः। एवं चाननुगतेन व्यञ्जकेन कथमनुगतव्यङ्ग्यान्यथासिद्धिरित्यपि नाशङ्कनीयम् , व्यञ्जकमात्रनिरासे व्यङ्ग्यताया एव जातावसम्भवात्। न च व्यञ्जकं विनैव साऽऽस्ताम् , व्यञ्जकाग्रहेणैव दोषविशेषेणापि जातौ संशयोपपादनसम्भवाद् व्यञ्जकनैयत्यस्य तस्यामप्रामाणिकत्वादिति वाच्यम् , केचित्त्वेकस्यैवेत्यादिना शारदायां दत्तोत्तरत्वात्। अधिकं त्वनुगतधर्ममात्रखण्डनमधिकृत्य प्रत्यक्षखण्डनशारदायामदर्शयम्।

मूलपृष्ठम् २०८—स्वकरणव्यापारेत्यादि । स्मृतेस्तु स्वकरणानुभवव्यापारसंस्कारोत्पत्त्यव्यवहितपूर्वक्षणेऽनुभवेन गोचरीकृतविषयकत्वमेव, न तु तदाऽज्ञातविषयकत्वमिति भावः। वृत्तिविशिष्टचित एव ज्ञानपदार्थत्वाच्चेति । ज्ञानत्वस्याज्ञानविरोधित्वरूपतोक्तिनिराकरणाय वस्तुगतिस्तावद्वक्तव्यैवेयम् , घटं जानामीत्यनुभवे च वृत्तावज्ञानविषयत्वाभावप्रयोजकत्वस्य वस्तुगत्या सतोऽपि स्फुरणाभावेन न कथमप्यज्ञातविषयकत्वभानसम्भव इति भावः।

मूलपृष्ठम् २०९—प्रमात्वस्यार्थसमाजग्रस्तत्वाच्चेति । तत्प्रकारकत्वतद्विशेष्यकत्वरूपप्रयोज्यद्वयसमाजात्मकप्रमात्वस्य प्रत्येकप्रयोजकसमाजमात्रायत्तत्वादित्यर्थः। प्रयोज्यद्वयं प्रत्येकं निष्पादयितुं प्रवृत्तः प्रयोजकसमाजः प्रयोज्यद्वयसमाजमनुनिष्पादयतीत्यार्थत्वमनुनिष्पादकत्वमत्र, तस्यानुनिष्पादितत्वरूपत्वे तु प्रमात्वस्य प्रत्येकप्रयोजकसमाजानुनिष्पन्नः= तन्मात्रायत्त इति यावत् ; यः प्रयोज्यसमाजस्तदात्मकत्वादिति कथञ्चिल्लब्धव्यम्।

इत्यबाधितत्वादिखण्डनशारदायां राजहंसः ।

## समाप्तं प्रमात्वखण्डनप्रकरणम् ।

## करणत्वखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् २११—कर्मणोऽप्यसार्वत्रिकत्वेनेति । अस्तीत्यस्यैवात्मनाऽऽत्मानं बिभर्तीत्येतत्परत्वे कर्मणोऽपि सार्वत्रिकत्वं स्यात् , अन्यत्राप्यकर्मकत्वाभिमतधातुषु तथाकल्पनसम्भवादिति यद्यपि शक्यते वक्तुम् , तथापि वस्तुगतिमनुरुध्य कर्मणोऽसार्वत्रिकत्वमुच्यते,

आत्मनाऽऽत्मानं बिभर्तीत्यस्यौपचारिकत्वात्, अत एव यत्कार्यं तत्सकरणकमिति व्याप्तिरप्यनुपदं त्यक्ष्यते। उक्तव्याप्तेरिति। यत्कार्यं तत्सकरणकमिति व्याप्तेरित्यर्थः।

मूलपृष्ठम् २१२—अतिव्याप्तेरिति। तत्क्रियाकर्त्रादेरपीति। ननु तत्क्रियाकर्त्रादेस्तत्क्रियाकरणान्यत्वनिष्ठव्यापारजनकत्वेन कथमतिव्याप्तिः। न च यथाश्रुतमूललभ्ये तत्क्रियाकरणान्यतत्क्रियाकारकाजनकतत्क्रियाकारकत्वे एवातिव्याप्तिः, नहि स्वं स्वात्मानं जनयतीति वाच्यम्, करणे व्यापारवत्तया निष्पाद्यताभिधानेन व्यापारघटितचारितार्थ्यस्यावश्यं वाच्यत्वात्। न च तत्क्रियाकरणान्यत्वघटितकल्पे व्यापारान्तर्भावो व्यर्थः, कर्त्राद्यजनकत्वमादाय समन्वयात्, नहि व्यापारोऽपि कारको येन तज्जनकत्वमादायासम्भवः स्यात्, 'स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके' इत्यादिवाचोयुक्त्या प्राचीनैर्व्यापारवत एव कारकत्वाभिधानेन व्यापारस्य चानवस्थाभिया निर्व्यापारतयाऽभ्युपगमनीयत्वेन कारकत्वानुपपत्तेः, क्रियाजनकत्वं कारकत्वमिति मते तु व्यापारस्य कारकत्वमर्हतोऽपि परिगणितकारकविशेषान्तर्भावस्य क्लेशसाध्यत्वात्, ग्रामादावप्यन्ततः कालदेशविशेषसम्बन्धस्यैव व्यापारत्वसम्भवेन गमनादिकर्मत्वोपपत्त्या व्यापारवत्कारणत्वस्य कारकलक्षणतात्यागानौचित्याच्चेति वाच्यम्, एवं हि मूले तत्करणान्यत्वनिवेशस्य व्यर्थताया अपि वक्तव्यत्वापातात्; तत्क्रियाकरणस्य तत्क्रियाकरणेनाजननात्, यदि तु तेन तस्य क्वचिद् द्विकरणकस्थले जननं सम्भाव्यते तथाप्यतिव्याप्तिवारणार्थमेव तत्क्रियाकरणान्यतत्क्रियाकारकनिष्ठव्यापाराजनकत्वस्य निवेशसम्भवात्, स्वनिष्ठव्यापारजनकत्वमादायासम्भववारणार्थं चेह तत्क्रियाकरणान्यत्वनिवेशस्यातीव सौष्ठवाधायकत्वादिति चेन्न, तत्क्रियानुकूलयादृशव्यापारवत्त्वेन तत्क्रियाकर्तृत्वं तादृशव्यापारवत्त्वेन न तादृशव्यापारजनकत्वम्, आत्माश्रयादित्याशयेनातिव्याप्तियोजनसम्भवात्, नचैवमग्रे स्वनिष्ठव्यापारजनकत्वमादायासम्भवाभिधानमसमञ्जसम्, यादृशव्यापारवत्त्वेन तत्क्रियाकरणत्वं तादृशव्यापारवत्त्वेन न तादृशव्यापारजनकत्वमात्माश्रयप्रसङ्गादिति हि तत्रापि शक्यते वक्तुमिति वक्तव्यम्, स्वनिष्ठव्यापारोपलक्षितस्य स्वनिष्ठव्यापारजनकत्वे आत्माश्रयाप्रसक्तेः। अथैवमत्राप्यतिव्याप्तिर्वार्यतामिति चेत्सत्यम्, अत एव स्वभिन्नप्रकृतक्रियाकारकेत्यादिस्वरसलभ्यव्याकृतावतिप्रसक्त्यादेः प्रागुक्तस्य स्मरणमग्रे कारितम्। तन्त्रादिपदेन यागेऽव्याप्तिः, इन्द्रियादौ च, अहंपदार्थनिष्ठपूर्वोनविकल्पकादिरूपव्यापारजनकत्वात्, अननुगमेन करणपदसमयग्रहानुपपत्तिश्च ग्राह्या।

मूले व्यापारवद्धि कारणमिति। व्यापारे सामग्र्यां चातिव्याप्तिवारणाय व्यापारवदिति, तत्क्रियाजनकत्वे सति तत्क्रियाजनकजनकत्वं तत्क्रियाकारकत्वमिति तु भावार्थः। तत्क्रियां प्रत्यन्यथासिद्धेऽतिव्याप्तिवारणाय सत्यन्तम्।

मूलपृष्ठम् २१४–असाधारणकारणपरतयेति। व्यापारवत्कारणपरतयेति तात्पर्यम्।

मूलपृष्ठम् २१५–करणपदत्वं चेति। न च करणेत्याकारकशब्दार्थत्वमेव लक्ष्यतावच्छेदकमिति न तत्र पदत्वनिवेशनिबन्धनं दूषणम्, शब्दार्थत्वस्य शक्तिघटितत्वेन तज्ज्ञानस्य शक्यतावच्छेदकज्ञानं विनाऽनुपपत्तेरित्याशयात्।

मूलपृष्ठम् २१६–मूले इति वक्तव्य इति। इति प्रश्ने सति वक्तव्य इत्यर्थः।

मूलपृष्ठम् २१७-नित्यं स्वज्ञानं प्रतीश्वरस्य करणत्वं स्यादिति । क्रियाशब्देन धात्वर्थविवक्षयेदम्, अन्यथा कार्यत्वस्य तत्राभावादेवातिव्याप्त्यप्रसक्तेः ।

मूलपृष्ठम् २१८-उक्तनिरुक्तावेवेति । यावत्सत्त्वं तादृशानिरूपकत्वे इत्यर्थः । लाघवादाह कालिकव्याप्तीति । तेनेति । तज्जनकत्वमनिवेश्य तत्सम्बन्धित्वनिवेशेनेत्यर्थः ।

मूलपृष्ठम् २१६-एवं च सति स्वस्वव्यापारेत्यादि । एवं च सति = उक्तसामग्रीलक्षणस्य दुष्टत्वे सति ।

मूलपृष्ठम् २२०-अन्यादृशीति । कारणतावच्छेदकरूपाऽतिरिक्तपदार्थरूपा वेत्यर्थः । कारणतानात्मकत्वे इति । स्वरूपसम्बन्धादिरूपकारणतां मनसि निधायेदम् ।

मूलपृष्ठम् २२२-अनुमित्युत्पत्तिक्षण एवोत्पन्नत्वादिति । परामर्शाव्यवहितोत्तरत्वं द्वितीयतृतीयक्षणसाधारणमिति तृतीयक्षणेऽनुमित्युत्पत्तिस्थले संस्कारस्यापि तदैव परामर्शेनोत्पादनम्, द्वितीयक्षणेऽनुमित्युत्पत्तिस्थले तु 'अनुमित्युत्पत्तिक्षणे' इत्यस्य सतिसप्तमीबलादनुमित्युत्पत्तिक्षणानन्तरमित्यर्थः ।

वस्तुतो वह्निमद्विषयिकाया अनुमितेरिति । अप्रमात्मकानुमितेरपि यद्यपि नाकरणकत्वप्रसङ्ग इष्टः, तथापि प्रमाणखण्डनस्य प्रस्तुतत्वेन प्रमात्मकानुमितेरेव सकरणकत्वं पूर्वपक्षे उपपादयितुमुचितं मन्वानस्येयमुक्तिः 'परमार्थतः' 'प्रमितिः' इति मूलस्थशब्दद्वयमनुरुध्य। अन्यथा तु वस्तुतो वह्निमद्विषयिकाऽप्यनुमितिरुपलक्षणीया ।

मूलपृष्ठम् २२५-बाधस्यानवकाशादिति । आपाद्याभावेनापादकाभावानुमितावित्यादिः । आपत्तौ त्वनुगुणतया बाधस्य शङ्कैव नावतरति ।

मूलपृष्ठम् २२८-प्रतिबन्धकसम्भवादिति । प्रतिबन्धकाभावस्थले तु कर्त्रादावतिव्याप्तिः, तस्यापि व्यापारोत्तरं व्यवधानेन फलोत्पत्तेः । कार्येऽसङ्घटिताकारे इति । कृत्याऽसम्बद्धस्वरूपे, साक्षात्कृत्यजन्ये इति यावत् । कार्यं = अपूर्वं ।

मूलपृष्ठम् २२९-व्यापारान्तरवत्तेति । व्यापारविशिष्टे व्यापारान्तरमिव घटकीभूतोऽपि व्यापारो नास्तीत्याशयेनोभयसाधारण्येन व्याचष्टे व्यापारवत्तेति ।

मूलपृष्ठम् २३२-अनुमित्युत्पत्तिक्षण एवोत्पन्नत्वादिति । अत्र किञ्चिदनुपदमुदितम्। तादात्म्येन विषयत्वेन कारणतेति । विषयत्वं धर्मविधयाऽवच्छेदकम् ।

मूलपृष्ठम् २३४-तदाऽर्थाक्षयोगमादायार्थेऽतिव्याप्तिरिति । अर्थाक्षयोगादानं नामार्थाक्षयोगस्यार्थव्यापारतयानुसन्धानम्, तस्मिन् सति स्वव्यापारपदेनार्थाक्षयोगो न ग्रहीतुं शक्यते तदुक्तं प्रकृतक्रियौपयिकव्यापाराप्रसिद्धेरिति स्वव्यापारोत्तरतादृशव्यापारकं यद्यत्तदन्यत्वमर्थे इत्यतिव्याप्तिरित्याशयः ।

मूलपृष्ठम् २३५—क्रियोपधायकत्वरूपस्य स्वव्यापारे इति । विवक्षितुमशक्यतयेत्यन्वयः ।

मूलपृष्ठम् २३६–अतिप्रसक्तत्वादिति। मनसा भ्रमेच्छादेरपि जननात्, तदा च मनसि तादृशानुभवकरणत्वाभावात्। अधिकं चात्र प्रादर्शि प्राक् शारदायाम्।

मूलपृष्ठम् २३८–नितरां तु प्रत्यक्षादिप्रमात्वस्येति। प्रमात्वन्यूनवृत्तिप्रत्यक्षत्वादि घटितधर्मावच्छिन्नकार्यतानिरूपितकारणताविवक्षा तु न शक्यते, घटत्ववति घटत्वप्रकारक-प्रत्यक्षत्वादेरपि तादृशधर्मस्यार्थसमाजग्रस्तत्वात्, तद्व्यक्तित्वावच्छिन्नकार्यतानिवेशे चान्यथा-सिद्धे ष्वतिव्याप्तेः, अनुगतधर्मावच्छिन्नकार्यतास्थले एव तज्जातीये व्यभिचारदर्शनेनान्य-थासिद्धे कारणतापत्तिरपाकर्तुं शक्यते न त्वन्यत्र, निरवधिकाननुगमापाताच्चेति भावः। इति कारणत्वखण्डनशारदायां राजहंसः।

## प्रत्यक्षखण्डनशारदायां राजहंसः

मूलपृष्ठम् २४३–विशेष्यताया विवक्षासम्भवाच्चेति। विशेष्यांशे सर्वस्यापि प्रत्यक्षस्य लौकिकत्वादितिभावः। अनुमित्याद्यन्यविशिष्टज्ञानत्वं वेति। अत्रान्तिमकल्पद्वये विशिष्टपदसम्भिमग्रन्थासङ्गतिपरिहारमात्रफलकम्, न तु व्यभिचारवारकमिति वाकारद्वयमना-स्थायाम्, निर्विकल्पजन्यज्ञानत्व एव तु निर्भरः।

मूलपृष्ठम् २४४—अत्रेन्द्रियपदमकिञ्चित्करमिति। न चात्मानुमितावतिव्याप्ति-वारकमिदमिन्द्रियत्वावच्छिन्नप्रतियोगिताकत्वसम्पर्णद्वारेत्यनुपदमुक्तं विरुध्यत इति वाच्यम्, स्वप्रकारीभूतविषयत्वावच्छिन्नानुयोगिकसम्प्रयोगजन्यत्वविवक्षयैवोक्तातिव्याप्त्यप्रसक्तेरित्या-शयात्। स्वप्रकारीभूतत्वोपादानं त्वापाततो लक्षणसमन्वयप्रदर्शनार्थम्। तदुपादानेऽप्य-तिव्याप्तेरग्रे वक्तव्यत्वेऽपि यथाश्रुतानुसारेणैवेदमिति तु तत्त्वम्।

मूलपृष्ठम् २४५—तस्यां स्वीयत्वं नोपात्तमिति। सम्प्रयोगापेक्षवर्तमानत्वोपादाने लक्ष्यज्ञानविषयताया भाविकालावच्छिन्नत्वाल्लक्ष्यीभूतज्ञानात्प्राक्कालस्यैव वर्तमानपदेन ग्राह्यत्वादितिभावः।

मूलपृष्ठम् २४६—अननुगमे तु तस्यैवेति। तस्य = अननुगमस्य। मया = मीमांस-केन। मीमांसासूत्रनिस्सृतं हि लक्षणमाक्षेप्तुं प्रक्रान्तम्।

मूलपृष्ठम् २४७—मूले एकव्यक्त्यभिहितलक्ष्यीभूतेति। स्वपदाभिहितैकव्यक्तिरूप-लक्ष्यीभूतेत्यर्थः। स्वत्वविषयकप्रत्यक्षासङ्ग्रहेणेति। स्वपदेन विषयविवक्षया स्वेन्द्रिय सम्प्रयोगजन्यं ज्ञानं स्वांशे प्रत्यक्षमित्येतादृशलक्षणेषु, स्वत्वविषयप्रत्यक्षाव्याप्तिस्तावत्स्पष्टैव, स्वपदार्थस्य तत्पदेन निवेशेऽपि चैतत्तुल्यम्, तत्तायां स्वगतत्वमस्ति न वेति विकल्पोपपत्तेः। प्रस्तुतलक्षणेऽपि स्वविषयेत्यत्र स्वश्चासौ विषय इति वा स्वस्य विषय इति वा समासः, आद्ये स्वीयार्थकतया स्वपदस्य विषयेऽपि स्वत्वं प्रविशतीति स्वत्वविषयकप्रत्यक्षेऽव्याप्तिसम्भवः। द्वितीये तु स्वशब्दस्य स्वरूपपरतया स्वत्वस्य स्वत्वानाश्रयत्वे निस्स्वरूपतापातेन प्रत्यक्ष-विषयताश्रयत्वमपि न स्यादितिभावः। वैयर्थ्यमवच्छिन्नान्तस्येति। स्वीयविषयतायाः

स्वाश्रयत्वानवच्छिन्नत्वाभावादिति भावः। अवच्छिन्नान्तमहिम्नैव स्वविषयताश्रयत्वलाभाददूरे त्वाह प्रथमपक्षेति।

मूलपृष्ठम् २५०—विवेदितं मतमेतत्पुरेति। अधिकं दर्शनसर्वस्वेऽपि समुपादर्शि।

मूलपृष्ठम् २५१—सिद्धसाधनेनानुमित्यनुदयप्रसङ्गेनेति। पक्षतावच्छेदकस्य हेतुत्वे स्वव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तेः पक्षान्तर्भावेनैव ग्राह्यतया साध्यभानं पक्षेऽनुमितेः पुरैवौचित्यानीतमिति भावः।

मूलपृष्ठम् २५२—सामानाधिकरण्यमतेरनिवार्यत्वादिति। साक्षात्कारित्वे इत्यादिः। उक्तरीत्येति। व्यभिचाराग्रहदशायामिति भावः।

मूलपृष्ठम् २५३—प्रमामात्रादिति यथाश्रुतमूले घटप्रमया घटस्वीकाराभिधानं न शोभते, तयैव घटस्वीकारशब्दार्थस्य क्रोडीकारात्। अतएव नात्माश्रयः स्थित्युत्पत्तिज्ञप्तिषु। घटप्रमाविशेषं प्रति घटस्य कारणत्वेऽपि घटं प्रति तस्याकारणत्वात्। यदि च घटविशिष्टप्रमाविशेषं प्रति घटस्य कारणत्वे घटं प्रत्यपि तत्, न च विषयितादिसम्बन्धेन विशेषणतास्थले नैवं प्रसङ्गः; तादृशसम्बन्धस्य तुरीये निरस्ततया तमादाय प्रत्यवस्थानानवकाशादिति हठादुच्येत तदाप्यतीन्द्रियस्य स्वज्ञाने क्वचिदप्यकारणतया वस्तुमात्रखण्डनं न लभ्येतेत्याशयेनान्यथा व्याचष्टे यस्याः कस्याश्चित्प्रतीतेः प्रमात्वसिद्धित इति। अर्थादुत्थास्नवो धर्मा इति। अनुमित्यादेः परोक्षत्वेन विषयाजन्यतया तज्जन्यतानवच्छेदकत्वमनुमितित्वादौ, साक्षात्कारित्वे तु तज्जन्यतावच्छेदकत्वमिति यद्यपि साक्षात्कारित्वानुपादानेन मूले स्वरसतः प्रतिभाति, तथाप्येवं सति तद्धीत्वस्य साक्षात्कारित्वात्मतायां पर्यवसानेन साक्षात्कारिविषयाणामेवात्माश्रयाद्यापत्त्या विलोपः प्राप्येत नत्वतीन्द्रियाणामपीत्याशयेनान्यथा व्याचष्टे विषयनिरूपिता नेति। नन्वेवमर्थादुत्थास्तुत्वाभावस्यार्थजन्यतानवच्छेदकत्वानात्मकत्वे साक्षात्कारित्वस्यापि तदाश्रयत्वेन 'न साक्षात्त्वादयो यथा' इत्येव मूले कुतो नाधीतमित्यत आह साक्षात्कारित्वस्य त्विति। विषयनिरूपितत्वमेवेति। तार्किकादिमते इति त्वनक्षरलभ्यम्। साकारवादे त्वखण्डविषयितानामपि न ज्ञानातिरिक्तविषयनिरूपितत्वम्।

मूलपृष्ठम् २५४—प्रमात्वसिद्धिरावश्यिकीति। परमते प्रमात्वस्य परतस्त्वात्, स्वतस्त्ववादेऽपि विवादिनं प्रति युक्त्यैव तत्प्रतिपादनौचित्यात्।

मूलपृष्ठम् २५६—अनुप्राससौष्ठवायेति। वादिनामित्यनेन विनाकृतस्य वाऽऽदीनामिति पाठस्योपलब्धमूलपुस्तकद्वये† उपलम्भेऽपि प्रादीनां चादीनामित्यनभिधाय वाऽऽदीनामित्यभिधाने किं मूलमितिजिज्ञासार्थाः प्रकारान्तरेण निवारणमनर्हन्त्या निवारणौचित्यमेवानुचिन्त्य वाऽऽदीनामित्यस्य प्रतिवेशतया वादिनामिति भ्रष्टतयाऽनुमितः पाठो योजितः, सुदृढं सम्भाव्यतां चैवं लेखनं सानुप्रासवक्राभिधानधनस्य मूलकृतः। अतएव वाऽऽदीनामित्यत्रैव प्रादीनां चादीनामिति वा मुख्यपाठकल्पनं नाध्यवसितम्।

† शङ्करमिश्र-विद्यासागरप्रणीतटीकाद्वयसाहित्येन मुद्रिते।

कर्मोपसंयोगद्योतका इति । कर्मणोऽर्थस्य नामाख्याताभ्यामुपसंयोगेन द्योतका उपसर्गा इत्यर्थः ।

मूलपृष्ठम् २५७—स्वरूपसत्त्वस्य भावपदशक्यत्वे तदवच्छेदकत्वे वा क्रमेणाह एवं चाभावेऽपीति । रत्यादिश्च गृह्यत इति । वीर्यपतनरयो भावः कामशास्त्रे इत्यप्युपलक्षणीयम् ।

मूलपृष्ठम् २५८—सर्वत्र समानत्वादिति । तत्तत्फलानामन्यथासिद्धेः प्रागुक्तत्वात् ।

मूलपृष्ठम् २६०—घरूपेति ह्रस्व इति । यद्यपि घरूपेतिप्रकरणस्थेन 'उगितश्च' तिसूत्रेण श्रेयसितरेत्यादौ ह्रस्वसिद्धिमुदाहरन्ति, तथापि तस्य प्राप्तविभाषात्वेनाप्राप्तनिषेधांशे एव तद्व्यापारस्य वक्तुमौचित्येन घरूपेतिसूत्रेणैव ह्रस्वः साधयितुमुचित इत्यभिप्रायः । एतेन नियमसूत्रोदाहरणत्वं व्यावर्तनीयेष्वेवोचितं नतु नियमसूत्रत्वप्रयोजकपूर्वप्राप्तिकसूत्रेण सिद्ध्यदित्स्वत्यपि दर्शितम् । नियमसूत्राणां व्यापारद्वयाभ्युपगमे निष्प्रयोजनगौरवप्रसङ्गात् । लाघवेन विधिमुखेनैव प्रवृत्त्युपगमस्य निषेधमुखेनार्थावगमं विनातिप्रसक्तिनिवारणानुपपत्त्याऽसङ्गतत्वात् । तथा च 'लव्यम्' 'अवश्यलाव्यम्' इत्यनयोरपि गव्यादिशब्दवद् 'वान्तो यि प्रत्यये' इत्यनेन सिद्धिं विधाय 'ओयते' इत्यादावतिप्रसङ्गमाशङ्क्य 'धातोस्तन्निमित्तस्यैवेति' सूत्रावतारणं सुषमामातनोति । एवमन्यत्रापि ।

मूलपृष्ठम् २६१—ननु प्रतिपत्त्राद्यभेदसंशयाभावस्तत्र कारणान्तरविरहेण प्रयुक्तो न तु तद्भेदभानरूपप्रतिबन्धकेनेति चेत्, तत्राह—प्रतिबन्धकस्य कारणान्तराभावेनाविनिगम्यत्वादिति ।

मूलपृष्ठम् २६२—सन्निकर्षस्तु निर्व्यापारत्वादिति । यद्यपीन्द्रियलक्षणस्य सन्निकर्षसाधारणत्वे इन्द्रियकरणकानुभवत्वं सन्निकर्षकरणकत्वमादाय सविकल्पकप्रत्यक्षे स्यात्, तत्र सन्निकर्षस्य निर्विकल्पकव्यापारकस्य करणतासम्भवात्, इन्द्रियलक्षणस्य चक्षुरादावपि गतत्वेन तु तत्करणकत्वेन निर्विकल्पकेऽपि प्रत्यक्षत्वव्यवहारः स्यात्, तथापि सन्निकर्षे इन्द्रियत्वव्यवहारविरहेण तद्व्यवहारप्रयोजकं सन्निकर्षव्यावृत्तमेव वाच्यमितिभावः । अतएवाह विविंकल्पकस्यापीति । सङ्ग्राह्यत्वात् = इन्द्रियलक्षणे साक्षात्कारिधीशब्देन विवक्षणीयत्वात्, तस्य = निर्विकल्पकस्य तद्व्यापारत्वानुपपत्तेः = सन्निकर्षव्यापारत्वानुपपत्तेः । एवं हि सति साक्षात्कारिधीसामान्यकरणता न सन्निकर्षे इति नातिव्याप्तिः । नचैवमपीन्द्रियकरणकानुभवत्वं निर्विकल्पके परं स्यात्, तत्र सन्निकर्षव्यापारमादायेन्द्रिये करणत्वोपपत्तेः, सविकल्पके तु सन्निकर्षनिर्विकल्पकद्वयव्यवधानेनेन्द्रियस्यान्यथासिद्धिरेव स्यात् करणत्वं तु दूर इति वाच्यम्, अन्यथासिद्धत्वकल्पनायाः प्रामाणिकव्यवहारमात्रशरणतया व्यापारद्वयकल्पनोपपत्तेः, नह्येक एव व्यापारो व्यापारिणोऽनन्यथासिद्धत्वं रक्षति न तु व्यापारद्वयमिति श्रीपत्युपक्षागमावगमितम् । साधीयानित्यत्र मूले 'अन्तिकबाढयोर्नेदसाधाविति पाणिनिस्मरणेन बाढपदार्थोत्कर्षविशिष्टप्रतियोगिकातिशयविवक्षायामीयसुनः प्रयोगौचित्येनातिशयप्रतियोगिनमाह

इन्द्रियलक्षणान्तरेत्यादि । प्रामाण्यवादे इत्यादि । सर्वांशे स्वप्नादावुपनीतभानाभ्युपगमे तत्रान्यथा तु सुरभि चन्दनमित्यादौ सौरभादिविषयकत्वावच्छेदेनाव्याप्तिरिति भावः।

मूलपृष्ठम् २६३—अपितु संशयत्वनिश्चयत्वस्मृतित्वानामिति । संशयत्वनिश्चयत्वयोस्तावत्प्रत्यक्षव्याप्यत्वमस्त्येव, प्रत्यभिज्ञाया आंशिकस्मृतित्वनये च स्मृतित्वस्यापि तथात्वम्, यदि चांशिकत्वस्य जातित्वाविरोधित्वमभ्युपेत्योक्तत्रितयस्य जातित्वमप्यनुमन्यते, तदा प्रत्यक्षवृत्त्यनुभवत्वाव्यापकजातितया तस्योपादानसम्भवेन प्रत्येकं तदवच्छिन्नस्य विप्रतिपत्तिवाक्यजस्य मतविशेषे शाब्दसंशयस्य परोक्षनिश्चयसामान्यस्य प्रत्यभिज्ञानानात्मकस्य स्मरणस्य च प्रत्यक्षविजातीयतया सङ्ग्रहो न स्यात्, प्रत्यक्षविजातीयेष्वन्तर्भावो न भवेदिति यावत्, अग्रे निर्वाच्यस्य प्रत्यक्षविशेषवृत्तितादृशजात्यवच्छिन्नत्वलक्षणस्योक्तत्रितयावच्छिन्नेष्वप्रसक्तेषु स्यादतिव्याप्तिरपीत्याशयेन 'निवेश्ये'त्यन्तम् । एवं सतीति । जातिघटितलक्षणादरे सतीत्यर्थः।

मूलपृष्ठम् २६४—नाव्याप्त्युपदर्शनसङ्गतिरिति । स्वविजातीयानुमितीच्छाकारणीभूताभावप्रतियोगित्वस्य प्रकृतप्रत्यक्षे समन्वयादिति भावः । निवेशनीयमिति । यथाश्रुते इतिशेषः । टीकायां परिष्कृतरीत्या त्वनुपलब्ध्यजन्यत्वमनुभवे निवेशनीयमिति भावः ।

मूलपृष्ठम् २६८—ईश्वरज्ञानजन्यत्वमादायासम्भववारणायाह स्वसमानाधिकरणेत्यादिरिति ।

मूलपृष्ठम् २६९—निर्विकल्पकं सविकल्पकं चान्तरेति । प्रतियोगितावच्छेदकप्रकारकज्ञानस्य निर्विकल्पकाव्यवहितप्राक्क्षणे कल्पनेऽपेक्षणीयतादृशायां तस्य सद्भावोपपत्तावपि तद्विषयस्योपस्थिततया निर्विकल्पकेऽपि भाने सर्वांशे निर्विकल्पकं विलुप्येत, अत्रेष्टापत्तौ तु सम्भवाभिप्रायेणान्तरेत्युक्तमिति द्रष्टव्यम् ।

मूलपृष्ठम् २७०—असम्भवप्रसञ्जक इति । ननु नायं दोषः, अतिरिक्तत्वमपास्याघटकत्वस्यैव निवेशनीयत्वादिति चेत्तत्राह नित्येति । प्रत्यक्षेत्यनेनान्वयः । ईश्वरे स्वीकृतस्य नित्यप्रत्यक्षस्य सर्वविषयकत्वेन तद्विषयाघटकाप्रसिद्धेः । अस्मदादेस्तु सर्वविषयकं प्रत्यक्षमलौकिकमेव सम्भवतीति भावेनालौकिकेति । अत्र लक्ष्यस्य सङ्कोचेऽपि तादृशजन्यत्वाभावकं धर्मं धर्मितावच्छेदकीकृत्यावगन्तव्य इति जातिरादर्तव्येति द्रष्टव्यं पूर्वलक्षणवत् ।

मूलपृष्ठम् २७१—प्रत्युत प्रत्यक्षमात्रासङ्ग्रहापत्तेरिति । ईश्वरीयप्रत्यक्षस्य ध्वंसाप्रसिद्ध्या निर्विकल्पकस्य च विशेष्यताया अप्रसिद्ध्या स्वपदेनोपादानानुपपत्तेः, अतएव जन्यसप्रकारकप्रत्यक्षत्वमेव लक्ष्यतावच्छेदकतया प्रागभ्यधायि ।

मूलपृष्ठम् २७३—तादृशसामान्याभावस्यातिप्रसक्तत्वादिति । स्मृत्यन्यत्वनिराकरणशारदोदितमत्रानुसन्धातव्यम् ।

मूलपृष्ठम् २७५—सम्भवेनासङ्गतिरिति । मूले व्याप्तकालेति पाठे तु नासङ्गतिशङ्कापि ।

मूलपृष्ठम् २७६–स्वंरूपमिति सूत्रनिष्फलत्वेति । राज्ञो यदिति विहितप्रत्ययो-'राजन्' शब्दादेव भविष्यति तस्यैव स्वजन्यबोधे भानात्, न तु तत्पर्यायान्नृपादिशब्दादिति किमेतेन शब्दस्य स्वरूपसंज्ञित्वप्रतिपादकेन सूत्रेणेति भावः।

मूलपृष्ठम् २७६–ग्राह्यमिन्द्रियसन्निकृष्टमिति । किन्तु प्रत्यक्षायोग्यम्, प्रत्यक्षयोग्य-स्यापि ग्रहणं तु तदंशे परं साक्षात्त्वानुभवप्रदर्शनार्थं स्यात्।

मूलपृष्ठम् २८०–कथं घटत्वस्याभिसम्बन्ध इति । काले जातेरनवच्छिन्नवृत्तिकत्व-मेव, संशयत्वादेर्जातित्वमतेऽपि नानुपपत्तिः, तस्य कालेऽनवच्छिन्नवृत्तिकत्वेऽपि व्यञ्जकानु-रोधेन व्यक्तौ तत्तत्कोटिविषयकत्वाद्यवच्छेदेन वृत्तिमत्त्वोपपत्तेरिति मतं हि न युक्तम्, घटत्वादे-र्धर्मतामधिगच्छतोऽवच्छेदकं धर्मिविशेषमस्पृशन्त्या इदानीं घटत्वमित्यादिमतेः स्वरसतोऽ नुदयात्। अवच्छेदकविशेषमनपेक्ष्यैव सर्वव्यापकत्वाविशेषेऽपि च घटत्वादिकमत्रैव व्यज्यते नान्यत्रेति कुतः। वस्तुस्वभावादिति चेदसौ घटत्वादिकं वा घटादिकं वा, व्यञ्जकविशेषो वा, नाद्यः, नियम्यनियामकभावविरोधात्, न द्वितीयः, घटत्वाद्यभिसम्बन्धं विना हि कथं घटादिकत्वम्। न तृतीयः, अक्षसन्निकर्षविशेषेऽपि संस्थानं प्राक्प्रतीयते जातिस्तु परत, इत्यस्याविनिगम्य-त्वात्, एकज्ञानविषयत्वनियतौ व्यङ्ग्यव्यञ्जकभावकल्पनाया निर्मूलत्वात्। ब्राह्मणत्वादिजातेः स्वाविषयकज्ञानविषयशब्दविशेषव्यङ्ग्यत्वमिति भट्टादिपक्षस्तु सर्वथैवा-श्रद्धेयः, सन्ततिविशेषप्रसूतत्वश्रवणेन ब्राह्मणत्वादेरनुमानं परं स्यात्, न तु प्रत्यक्षात्मिकाऽ-भिव्यक्तिः, न च प्रत्यक्षत्वाभावेऽपि प्रत्यक्षयोग्यव्यक्तिगतधर्मस्य जातित्वम्, प्रसिद्धजाति-वैलक्षण्येऽपि जातित्वं तु दुराग्रहैरेव रक्षितम्। अतएव प्राभाकरैः सन्ततिविशेषप्रसूतत्वमेव ब्राह्मणत्वादिकमुच्यते न तु जातिरूपम्, संस्थानेनैव जातेरभिव्यक्तेः। तन्त्रालोकपरात्रिंशि-कादौ मुकुटसंहितानुसारिश्रीमदभिनवगुप्तपादाचार्यादिदर्शितदिशा ब्राह्मणत्वादेः सन्ततिविशे-षप्रसूतत्वरूपताऽपि नास्ति, किन्तु स्वभावविशेषरूपतेत्यन्यत्। मनुष्यत्वव्यवहारप्रयोजका-कृतिविशेषे पित्रोरनन्यथासिद्धत्वेऽपि शमाद्यौपयिकशक्तिविशेषस्य सङ्कल्पबलेन वीर्ये रजसि चाधानं विना ब्राह्मणत्वादौ तयोरन्यथासिद्धत्वात्, स्वकीयादृष्टविशेषमात्रेणापि च पुत्रे शमाद्युपपत्तेः। अल्पे वयस्युपनेतव्यः स्याद्, ब्राह्मणः, शान्तात्मा च स स्यादित्यादिस्थले तु गृहस्थः सदृशीं भार्यामुपेयादित्यादिस्थले इव भाविनीं वृत्तिमाश्रित्योद्देश्यता। ब्राह्मण इत्यस्य ब्राह्मणपदभाग्बुभूषुरित्यर्थे पर्यवसानात्। भूयस्त्वात्तु. तद्वाद इति न्यायेन च शमादिप्राधान्येन ब्राह्मणत्वादिव्यवहारः, तेन ब्राह्मणत्वादिना प्रामाणिकव्यवहारविषयेऽपि कदाचित्क्रोधाद्युद्भवे न सहसैव ब्राह्मणत्वादिव्यहारत्याग इत्यादिकस्तेषामाशयः स्वयमूह-नीयः। प्रकृतमनुसरामः।

प्रतिव्यक्तिविश्रान्तत्वेन संस्थानस्यैव जातित्वं तु केनोच्येत, तस्यापि किञ्चिदनुगतं धर्मा-न्तरमादायानुगमस्तु पुनर्दुरवस्थातिरिक्तजातिं शरणीकरोति। अतएव संस्थानविशेषावच्छिन्न-सत्तायास्तत्तज्जातिस्थानीयत्वमिति पक्षोऽप्यपासनीयः। तत्तद्घटव्यक्तिभेदकूटवद्वृत्तिविषयता-सम्बन्धेन यावद्घटव्यक्तिषु सम्बद्धं तावद्विषयकं ज्ञानमेव 'अयं घटः' इत्यादौ स्वरूपतः प्रकारतया भासमानं घटत्वमिति रीतिस्तु निराकृता दर्शनसर्वस्वे शरीरशरीरिभावभङ्गे। तादृशज्ञानव्यक्तीनामपि नानात्वेनानुगतव्यवहारनिर्वाहकत्वासम्भवतु स्पष्ट एव। किञ्च सर्वेषां घटानां भानं विना तादृशज्ञानस्य 'अयं घटः' इत्यत्र स्वरूपतो भानमश्रद्धेयम्, न च सर्वे घटा-

भान्ति कस्यचित्, प्रत्युत सर्वघटान् जानामीति वदन्तमुपहसन्ति। सामान्यलक्षणप्रत्यासत्तिनिराकृतिशारदा चात्रानुसन्धातव्या। न चापरोक्षज्ञाने परोक्षज्ञानस्यापि सर्वविषयकस्य स्वरूपतो भानं सम्भाव्यत इति विभावनीयम्। युक्त्यन्तरं च जातिमात्रखण्डनस्य 'प्रत्यक्षत्वस्यैकत्वे पटाविषयकप्रत्यक्षेऽपी'त्यादिना शारदायामग्रे व्यक्तमनुपदम्।

प्रत्यक्षत्वातिरिक्त इति। प्रत्यक्षत्वेन मानसत्वमप्युपलक्षणीयम्।

प्रत्यक्षत्वे एवेति। मानसत्वे उपनायकज्ञानजन्यतावच्छेदकताया निरसिष्यमाणत्वादिति भावः।

मूलपृष्ठम् २८१—वह्निमनुमिनोमि स्मरामीत्यादि। अत्रानुमित्यादेः प्रत्यासत्तित्वं वह्निभानार्थं विवक्षितम्।

मूलपृष्ठम् २८२—तादृशधीविषयत्वादित्याहुरिति। लघुचन्द्रिकोक्तपक्षेऽस्मिन्नयमस्वरसः—विपरीतज्ञानोत्तरत्वस्य वह्न्यादिप्रमात्वनिश्चये सर्वत्रासम्भवेन न सार्वत्रिकः परामर्शोपयोगोऽनया रीत्येति। न लैङ्गिक इति। अनुमितित्वस्य प्रत्यक्षत्वव्याप्यत्वानुपगमपक्षे व्याचष्टे नानुमितित्वेत्यादि। तदुपगमपक्षे तु प्रत्यक्षत्वविरुद्धतयाऽनुमितित्वमिह निषेध्यकोटौ ग्राह्यम्।

ननु 'घटादिप्रत्यक्षत्वे' इत्यस्य घटादौ प्रत्यक्षत्वावच्छिन्नविषयत्वे इतिकुतो नार्थः? तत्राह, साक्षात्कारित्वस्येति। ग्रस्तत्वे त्विति। घटादाविति शेषः। न युज्यत इति। तादृशविवादस्य घटादिप्रतीतेः प्रत्यक्षत्वजातिमत्तायां पर्यवसानादितिभावः।

मूलपृष्ठम् २८३—निश्चयीयविषयतानिरूपितविषयतेति। इयं धर्मिणि।

मूलपृष्ठम् २८५—बहुशो निरस्तत्वादिति। विषयितागतविशेषस्य प्रतीतिसाक्षिकतया निरूपणे प्रतीतिविषययोः परस्परायत्तप्रमात्वसत्यत्वसिद्धिकत्वादितिभावः।

उक्तन्यायस्येति। 'किञ्च कल्प्यमानाया अपि जातेः' इत्यादिना 'प्रत्यक्षत्वस्यैकत्वे पटाविषयकप्रत्यक्षेऽपी'त्यादिना च शारदायां प्रायोऽनुपदमुक्तन्यायस्येत्यर्थः। जातित्वं स्वीक्रियत इति। भट्टादिभिरिति तु प्रसिद्धत्वाल्लब्धुं शक्यते। तेन वस्तुगत्या ब्राह्मणत्वादेश्चित्तगतयोग्यताविशेषरूपत्वस्यैव पक्षान्तरापेक्षयोक्तरीत्या क्षोदक्षमतायाः सम्भवेऽपि न क्षतिः, योग्यताविशेषश्चासौ दृष्टादृष्टसामग्रीप्रसूततयाऽऽगमापायी, सङ्कीर्णश्च क्वचिद्विजातीययोग्यताविशेषेण, परशुरामद्रोणादौ क्षत्रत्वब्राह्मणत्वोभयस्यैव प्रतिष्ठितत्वव्यवहारदर्शनात्। पक्षान्तरापक्षयपुरस्सरमेतत्पक्षोपपादनं तु स्वतन्त्रनिबन्धनिबन्धनमपेक्षते, न वा कलिकालस्यैव कवलतां कलयति धर्मेऽयशो विचार ईदृशः कस्यचिदुपेयस्योपायतामप्युपैतीत्युपरम्यते।

मूलपृष्ठम् २८६—यथा न निरास इति। प्रवृत्तिं प्रति क्लृप्तकारणताबलाद्विशिष्टज्ञानसिद्धौ तदन्यथानुपपत्त्या कल्पनीयो भेदाग्रहः स्वोपजीव्यं विशिष्टज्ञानं प्रतिक्षेप्तुमप्रभुरितिभावः।

मूलपृष्ठम् २८८—आहत्यैवेति। साक्षादेवेत्यर्थः। अलक्ष्यत्वसम्भवइति। यद्यपि तस्यालक्ष्यत्वेऽपि लिङ्गाद्यन्तर्गतशब्दजन्यत्वमेवेति नातिव्याप्तिसम्भवः, तथापि लिङ्गादीत्यत्रादि-

पदार्थेषु विप्रतिपत्तिभिन्नमेव शब्दं प्रवेश्य मूलं कथञ्चिद्योजनीयम्, परोक्षविपर्यासार्थका-दिशब्दोपादानेन लिङ्गादीत्यत्र परोक्षप्रमाकरणानामेव प्रवेशस्य ध्वनितत्वादितिभावः। दूषणान्तराणि त्वत्र लक्षणे शारदायां परतो वदन्त्येवेति न क्षतिः। करणतापर्यन्तधावनं त्यक्तुमाह विशिष्टबुद्ध्यादौ विशेषणज्ञानत्वादिनेति।

मूलपृष्ठम् २६१—अनुयोगिताविशेषविशिष्टान्यत्वेनेति। सर्वस्यापि तद्व्यक्तित्वस्य यत्किञ्चिद्भेदप्रतियोगिनि यत्किञ्चिद्भेदानुयोगिनि वर्तमानतयाऽसम्भवो मा भूदिति स्वप्रति-योगिवृत्तित्वस्वानुयोगिवृत्तित्वाभ्यां भेदविशिष्टान्यत्वं परित्यज्य प्रतीतिविशेषसाक्षिकृतत्त-द्भेदगतानुयोगिताविशेषमादाय लक्षणसमन्वयप्रदर्शनार्थमनुयोगिताविशेषविशिष्टत्वनिवेशः। परन्त्वेवं शब्दानुगमो नत्वर्थानुगम इत्याशयेनास्वरससूचनायानुगमाभ्युपगमेऽपीत्युक्तम्।

मूलपृष्ठम् २६५—भावत्वं चाखण्डमिति। तेन न जन्यतावच्छेदकगौरवम्।

रुणद्धीति भाव इति। असगतिदीप्त्यादाविति भौवादिकस्य लुङि तादृशरूप-सम्भवस्योपलक्षणमिदम्। एवं च माङपि शक्यः प्रयोक्तुम्। अर्थस्तु प्रकृतोपयुक्त एव ग्राह्यः। अतिप्रसञ्जकत्वस्येति। द्वित्वादिस्थले समवायावगाहने घटो द्वित्ववानितिमतेरिव घटौ द्वावितिमतेरपि प्रमात्वप्रसङ्गो न त्वेकत्वस्थले इति भावः।

मूलपृष्ठम् ३००—सत्फलप्रसूरसाविति। अनया वाचोभङ्ग्या जगद्धात्र्यपि स्मृता मङ्गलायेति। शारदार्णव इति। सारस्वतार्णव इत्यर्थः। ग्रन्थपक्षेऽपि शारदाशब्दव्युत्पत्ति-प्रभेदा उपक्रमे एवानुक्रान्ताः। तत्र मूलग्रन्थस्य तरणं तद्व्याख्यायां तस्यास्तु समाप्तौ पर्यवस्यति, तदनुकूलयत्नपरम्पराया अव्युपरमः पुनस्तिङन्तमहिम्ना प्रतीयते। तेनेत्यनेन पूर्ववाक्यार्थः परामृश्यते। इति प्रत्यक्षखण्डनशारदायां राजहंसः।

## अनुमानखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ३०१—प्राणिता इति। शाक्तेन स्फारेण प्राणितानां=आवेशिततयाऽऽपा-दिततत्तत्क्रियाक्षमतानां केशवशिवादीनां परस्परकार्यकारिताया अपि दर्शनात् प्रत्येकमपि सत्त्वादिव्यक्तीनामानन्त्याच्च गुणगणनियामकत्वं तेषु नानुपपन्नम्, सत्त्वत्वाद्युपाधिनानु-गममादृत्य तु गुणेषु त्रित्वव्यवहारः। सञ्जिता न तु स्वयमेव सक्ताः, तथा चानेन भगवदनु-ग्रहशक्तिवशंवदत्वं सन्मार्गप्रवृत्तेरवद्योत्यते। मञ्चिता इति। निस्सीमोपासनासम्पदा प्रसन्नया विश्वप्रसवित्र्या कृपापीयूषवर्षणवशेन गुणेश्वरा अपि स्वमञ्चतां नीता इति यत्, तत्तस्याः परमुचितम्, अचिन्त्यचरितैश्वर्यत्वात्। मदनदृष्टीति। कामाक्षीतिप्रसिद्धेः। दहनात्पुरैव कामं मुख्यं स्वाराधकाग्रेसरतया नेत्रयोः संस्थाप्य कृत्रिमं तं भगवतो भवस्य पुरः प्रेषितवतीत्याहुः। अस्मदर्थस्य प्राणभूता दृष्टिर्यस्येति चार्थः। त्रैपुरमिति। त्रिमूर्ति-सर्गपूर्वभाविन्याः शिवशक्तिसामरस्यात्मिकाया सविशेषब्रह्मप्रथमविभक्तेः किमपि = अनि-र्देश्यं महो मन्महे=स्वात्मतयाऽनुसन्दध्मः। त्रैपुरमित्यत्र व्यपदेशिवद्भावेन तद्धितः पर्यवस्यति।

निष्कृष्टस्यैवैश्वर्योपबृंहितस्यापि च चैतन्यस्य स्वात्मतयाऽनुसन्धानं नानुपपन्नम्, यदाहुः—

'अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या'॥ इति स्पन्दे ।
न ध्यानं मुखमुद्रादिकलानां परिकल्पनम् ।
ध्यानं शक्तिसमावेशात्सुमहत्सामरस्यकम्॥ इति नित्याषोडशिकार्णवे ।

कलानाम्=अवयवानाम् । शक्तिसमावेशात्=शक्तिसमावेशमादाय । सुमहता ब्रह्मणा सामरस्यम्=ऐक्यं यत्रेत्यर्थः । ताटस्थ्येनानुसन्धानं तु कृपणा काचिद्दशा ।

प्रमितिकरणतावच्छेदकरूपविरहमेव सोपष्टम्भं कुरुते नच वक्तृव्यरीत्येति । निश्चयत्वाभिमान इति । निश्चयत्वस्य बाधितो व्यवहार इत्यर्थः । यद्यप्यनिश्चये निश्चयत्वं नानुव्यवस्यन्ति, तथापि स्वकौशलख्यापनाय चपलानां तथा व्यवहारो बहुलं विलोक्यते। अयं पुनरत्र विवेकः— स्थूलार्थेषु तावत्स्थूलधियां युक्त्या निश्चय एवं, सूक्ष्मार्थेष्वपि हेतौ सूक्ष्मदोषविवेचनाक्षमत्वेन प्रायो निश्चय एव, सूक्ष्मधियां तु सूक्ष्मार्थे युक्त्या सम्भावनैव, निश्चयस्त्वागमादितः । लौकिकार्थे तु कदाचिन्निश्चयोऽपि युक्त्या कस्यचिज्जायमानः सूक्ष्मदृशां प्रमात्वविप्रतिपत्तिं प्राप्नोत्येवेति । एतच्च 'किञ्च लाघवप्रतिसन्धानवेशेन' इत्यादिना परतः शारदायां व्यक्तम् ।

मूलपृष्ठम् ३०२—मूलेऽनुमानशब्दस्य भावल्युडन्ततापक्षे किञ्चिदनुक्त्या न्यूनताप्रसक्तिं परिहरन्नाह अत्र यद्यपीत्यादिना । न च प्रमाकरणखण्डनस्यैव प्रक्रान्ततया किं भावल्युडन्तानुमानशब्दार्थखण्डनेनेति वाच्यम्, अनुमितिखण्डने तत्करणखण्डनसम्पत्तेरावश्यकत्वात् । सपरिकरप्रमाणनिराकरणस्य चात्रौचित्यात् । निवेश आदर्तव्य इति । अन्यथा व्याप्तिघटकसाध्यतावच्छेदकाभावत्वाधिकरणत्वादितत्तद्धर्मरूपेण वस्त्वन्तरावगाहिपरामर्शासङ्ग्रहप्रसङ्गात् । विशिष्टस्मरणादाविति । व्याप्यविशिष्टपक्षस्मरणे व्याप्यविशिष्टपक्षवैशिष्ट्यबोधे चेत्यर्थः । अनतिप्रसङ्ग इति । विशिष्टस्मरणादिकारणतावच्छेदकगर्भे विशेष्यताप्रकारतात्वादिना विषयतानिवेशात्, अन्यथाऽन्याकारकानुभवादन्याकारकस्मरणादिप्रसङ्गात् । अनुमितिहेतुत्वे त्विति । अत्र कल्पे पक्षे व्याप्यत्वावच्छिन्नप्रकारताकत्वघटितरूपस्यानुमितिजनकतावच्छेदकस्य वह्निव्याप्यधूमवान् पर्वत इति विशिष्टस्मरणादिजनकानुभवसाधारणत्वेन प्रसज्यतेऽतिव्याप्तिः । तादृशनिश्चयत्वेति । व्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षताच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेत्यर्थः । लाघवादिति । व्यापकसामानाधिकरण्यापेक्षया शरीरे लाघवात्, हेतुतावच्छेदकस्याप्यनिवेशनीयत्वाच्च । तद्व्यक्तित्वेनापीति । अत्र कल्पे परामर्शविषयकानुव्यवसाये, विशेषदर्शनजन्यविपरीतज्ञानोत्तरप्रत्यक्षादौ च नातिव्याप्तिशङ्कापि, पूर्वकल्पे तूत्थितापि सा तत्र व्याप्यत्वावच्छिन्नप्रकारताकपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयस्य विषयत्वविपरीतज्ञानविरोधित्वादिना कारणता न तु तादृशनिश्चयत्वेनेत्येवं तार्किकैरपाक्रियते । उपलक्षणतयेति । उपलक्षणत्वे इत्येतदुपलक्षणतया जनकत्वे

इत्येतदर्थकतया तु न व्याख्यातम्, उपलक्षणस्याविद्यमानतया तत्र जनकत्वशङ्काया अतितुच्छत्वात्।

मूलपृष्ठम् ३०४—यत्र व्याप्तिबलायातमित्यादि। अत्र वह्निसामान्यतद्विशेषसिद्ध्योः क्रमो वा तद्विषययोर्विशृङ्खलतया भानं वा नानुभवमारोहति पर्वतो वह्निमानित्येव ज्ञानोदयात्, पर्वतीयवह्निभाने च धूमे पर्वतवृत्तिताया भानस्यापि प्रयोजकतया बलादेवेत्येवकारासङ्गतिश्च, न वा पर्वतो वह्निमानितिभानस्य व्याप्तिधर्मिवृत्तिताभ्यामेव निर्वाहेण सामान्यप्रतीत्यपर्यवसानमपि, एतेनैवकारेण पक्षतामात्रं व्यावर्त्यत इत्यपि नाशङ्कनीयमित्यालोच्य सिद्धिशब्दस्यायातशब्दस्य च विषयतापरत्वम्, सामान्यपदस्य तु जातिपरत्वमित्याशयेन व्याचष्टे—यत्रानुमितावित्यादिना। जातिनिष्ठसमवायेत्यादि। कालो गोत्ववानितिग्रहं व्यावर्तयितुं समवायेति। स्थाएवादौ गौरियमितिग्रहं व्यावर्तयितुं तु प्रमीयेति। संशयनिवृत्तिफलकतयेति। निवृत्तिः = अनुत्पादः। संशयविरहात् = सिद्धिवशादेव संशयाप्रसक्तेः। त्वद्विभवमिति। परमेश्वरोऽत्र स्तूयते।

मूलपृष्ठम् ३०५—ननु स्वव्यापकसाध्यसामानाधिकरण्ये धर्मिवृत्तितानिवेशेऽपि साध्याभाववद्वृत्तित्वे नासावित्यत आह—

साध्याभाववदवृत्तित्वरूपव्याप्तावपीति। गगनादावतिव्याप्तिवारणायेति शेषः। आदृतत्वादिति। वृत्तिमत्त्वमात्रनिवेशेऽपि वृत्तेर्धर्मिनिरूपितत्वनियमादिष्टलाभः। घटकानुमितावन्वेतीति। अत्र पक्षे तृतीयान्तार्थस्य तु परामर्श एवान्वयः।

मूलपृष्ठम् ३०६—वृत्तिताज्ञानजे ज्ञान इति। फलीभूतज्ञाने व्याप्तिविषयकत्वमस्तु मा वेति भावः। न राज्ञामाज्ञेति। अतएव वायुं साक्षात्करोमीत्यनुव्यवसायस्य वैशेषिकैरभावं साक्षात्करोमि ज्ञानं साक्षात्करोमीत्यनयोश्च भाट्टैः स्पन्दं साक्षात्करोमीत्यस्य च प्राभाकरैरप्रामाण्यमुपेयत इत्यपि द्रष्टव्यम्। यद्यपि भिन्नविषय इति। भिन्नविषये एव न तु समानविषये, प्रकृते तु समानविषयत्वमेवेतिभावः।

मूलपृष्ठम् ३०७-पक्षद्वयसाधारण्यसम्भव इति। व्याप्तिग्रहो हि सहचारदर्शनाधीनो वाऽन्यथा वेति पक्षद्वयं मूले पञ्चम्यन्तद्वयप्रतिपाद्यम्, तत्साधारण्यसम्भवः, विमर्शेऽन्वये प्रथमपक्षसाधारण्यं न स्यादिति भावः।

मूलपृष्ठम् ३०८-तार्किकाणां वैयर्थ्यप्रसङ्ग इति। न च सामान्यस्याकस्मिकत्वपरिहाराय न सामान्यकार्यकारणभावः, किन्तु प्रवृत्तिनिर्वाहायेति वाच्यम्, यतो घटत्वावच्छिन्नं प्रति दण्डत्वावच्छिन्नं कारणम्, यतो घटत्वं नाकस्मिकं किन्तु दण्डत्वप्रयुक्तमितियावत्, अतएवोत्पादनीयघटार्थमपि दण्डविशेष उपार्जनीय इति विमृश्य प्रवृत्तेरनुभवेन तन्निर्वाहस्यापि सामान्यस्याकस्मिकत्वाभावज्ञानसापेक्षत्वादित्याशयात्।

व्यापकधर्मविरहिण इति। विरहोऽत्र सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकः प्रविष्टः। कारणत्वप्रसङ्गादिति। यद्यपि पर्वतादौ पर्वतत्वादिमात्रावगाहिज्ञान-

स्यापि व्यक्त्यन्तरविशेष्यकत्वादिसम्भवः, अतएव सामान्यलक्षणानिराकर्तृभिर्महानसीये धूमे एव वह्निव्याप्यो धूम इति ज्ञानस्य धूमत्वमात्रावच्छिन्नविशेष्यताकस्यानुमित्यौपयिकत्वं समर्थ्यते, तथापि पर्वतत्वाद्यतिरिक्तधर्मस्याप्यवच्छेदकत्वस्थले दोषदानसम्भवः, शुद्धपर्वतत्वादेरवच्छेदकत्वस्थले तु सुतरामित्याशयेनाह। अधिकं त्वितिन्यायेनेति। ननु सामान्यकार्यकारणभावेऽतिप्रसङ्गभङ्गाय व्यक्तिविशेषघटितकार्यकारणभावोऽप्यालम्बनीयः, न च सामान्यलक्षणाया निराकरणीयत्वेन वह्निविशेषस्य कथं पुरा भानमिति वाच्यम्, तन्निराकरणपक्षे व्याप्त्यंशे सामान्यरूपेण व्यक्त्यन्तरभानस्यैव कारणतानुकूलत्वात्, पक्षधर्मताभानस्य तु प्रकृतपक्षं प्रकृतहेतुं चादायाऽपि सम्भवादित्यतः कार्यकारणभावद्वयसाधारणानुगमप्रणालीराह—किञ्चेत्यादिना।

मूलपृष्ठम् ३०९—शपथैकप्रमाणकमेवेति। अनुमितेः पक्षविशेष्यकत्वनियमे हि परामर्शेऽपि तन्नियमः स्यात्, नचासौ सम्भवति, पर्वते वह्निरिति पक्षप्रकारिकाया अपि सम्भवादनुमितेः, परार्थस्थले प्रतिज्ञोपनयानुरोधेन कथंचित् सम्भाव्येताऽपि पक्षविशेष्यकत्वनियतिरनुमितिपरामर्शयोर्नतु स्वार्थेऽपीति भावः। नैवमपि त्ववच्छेद्यावच्छेदकभाव इति। ऐक्यपक्षे पुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वरूपप्रतिबन्धकतावच्छेदकरूपाक्रान्ततया रक्तदण्डवत्पुरुषवानयं देश इति बोधस्य पुरुषाभाववान् दण्डइति बोधं प्रति प्रतिबन्धकतापत्तिरिति भावः।

मूलपृष्ठम् ३१०—यो वा कारणतावच्छेदकस्येति। कारणतावच्छेदकलाघवं व्यापकसामानाधिकरण्यापेक्षया शरीरलाघवं विवक्षितम्, धूमत्वालोकत्वादिभेदेऽपि साध्याभाववदवृत्तित्वावच्छिन्नविषयकनिश्चयत्वेनैकस्या एव कारणताया कल्पनीयत्वात्तु कल्पनालाघवम्। एवं च व्यभिचारसंशयस्येति। नैकविधव्याप्तिज्ञानानामनुमितिं प्रति कारणतायां निश्चेतव्यायां व्यभिचारसंशयस्तादृशकारणताग्रहप्रतिबन्धकः। लाघवज्ञानस्योत्तेजकत्वं तु तत्र तदा स्याद् यदि गुरुभूतव्याप्तिज्ञानेनानुमितेरानुभविकत्वं न स्यात्। स्वरूपतः साध्यतावच्छेकभानेनापीति। कारणतयाऽनुमते 'ज्ञानं तादृशाभावाप्रतियोगी'त्यत्र ज्ञाने स्वरूपतो हि ज्ञानत्वं भासते। अनुगमकं न किञ्चिद्रूपमिति। अथ प्रमात्वविरोधित्वेनानुगमः, विरोधित्वं चासामानाधिकरण्यम्, तेन प्रमात्वविशेषग्रहप्रतिबन्धकग्रहविषयत्वरूपविरोधस्य समानाकारकग्रहस्यैव विरोधित्वपक्षे सर्वेष्वप्रमात्वेष्वसम्भवेऽपि न क्षतिः, प्रमात्वं च सर्वांशे, तेनांशिकप्रमात्वासामानाधिकरण्यस्य सर्वांशे प्रमात्वे सत्त्वेऽपि तद्रूपतया गृह्यमाणपरामर्शस्य नासङ्ग्रह इति चेन्न, सर्वेषां प्रमात्वानां निरासस्य प्रागुपदर्शितत्वात्, असामानाधिकरण्यस्यापि विरोधहेत्वाभासनिरासावसरे निरसिष्यमाणत्वाच्चेत्याशयात्।

मूलपृष्ठम् ३११—कार्यानुपलब्धिलिङ्गकेति। नहि धूमसामान्यं प्रति वह्नित्वावच्छिन्नकारणतानुपगमे तेन लिङ्गेन वह्नित्वावच्छिन्नस्य वह्नित्वावच्छिन्नानुपलब्ध्या च धूमसामान्याभावस्यानुमानसम्भव इति भावः। एकशक्तिमत्त्वेनापीति। नैकाशक्तिरनेकेषु

समानकालीनेष्वपि सम्बन्धमर्हति किम्पुनरुत्पत्स्यमानविनष्टेष्विति च जातिमात्रखण्डन-शारदाप्रणाल्याऽऽलोकनीयम्।

मूलपृष्ठम् ३१२—अतएवानुमित्यनुकूलेति। अत्रेदमपि तत्त्वम्, को घटवान् इति प्रश्ने घटवान् घटवानित्यस्येव पर्वतादिपक्षकानुमितिं प्रति कस्य कारणतेति प्रश्नेऽस्यानुत्तर-त्वम्, उक्तप्रश्नस्य तादृशानुमित्यनुकूला क शक्तिरित्यत्र पर्यवसन्नत्वात्। एतेनेति। उक्त-बहुविसवापत्तिदोषेणेत्यर्थः। व्यभिचरितत्वमिति। तत्परामर्शनाशयोग्यत्वस्य सर्वानुमिति-साधारण्यात्। अलीकत्ववादिनामिति। सामान्यस्याकस्मिकत्वप्रसङ्गपरिहारः कारणोपादा-नार्थप्रवृत्तिश्चेति द्वयं सामान्यकार्यकारणभावप्रयोजनम्, तत्राद्यं सामान्यस्यालीकत्वमतेऽन-पेक्षितमेव, द्वितीयं तु संवृत्यैव कथञ्चिन्निर्वाह्यं सामान्यस्यालीकत्वसिद्धाविति भावः। भाविसाध्यकानुमादाविति। न चेदृशानुमितेः परम्परया प्रवृत्त्यपेक्षणीयत्वेऽपि तज्जन-कत्वं नास्ति, प्रवर्तकत्वं तु तज्जनकत्वमेव विवक्षितमितिवाच्यम्, एवं विवक्षणेऽपि तादृश-नियमे मूलस्य कालविशेषभानस्यैव वक्तव्यत्वादित्याशयेनाह एवञ्चेति।

मूलपृष्ठम् ३१३*—तावतापि धूमकालावच्छिन्नत्वस्येति। इदं सावधारणम्, न तु तद्धूमकालावच्छिन्नत्वस्येति भावः, शुद्धधूमत्वेनैव लिङ्गत्वात्। उक्तदोषेति। कालान्तरेऽपि प्रवृत्त्यापत्तिरूपदोषेत्यर्थः।

मूलपृष्ठम् ३१४—स्थलासङ्ग्रहापत्तेरिति। काचित्कपदार्थे किञ्चिद्देशान्तर्भावे सार्व-त्रिकपदार्थे सर्वदेशान्तर्भावस्य वक्तव्यत्वादिति भावः।

मूलपृष्ठम् ३१५—यावद्धूमाधिकरणाप्रसिद्धिरिति। सर्वमूर्तसंयोगित्ववतां हेतुतावच्छे-दकसंयोगसम्बन्धेन यावद्धूमाधिकरणत्वेऽपि तन्निष्ठभेदप्रतियोगितावच्छेदकतायाः साध्यता-वच्छेदसंयोगसम्बन्धावच्छिन्नाया अनधिकरणे घटादौ धूमव्यापकताव्यवहारविरहेण विलक्षणसंयोगस्यैव हेतुतासाध्यतावच्छेदकतया विवक्षणीयत्वादितिभावः। वा हेतुताया इति। अनुपपत्तेरित्युत्तरेणान्वयः। अवच्छेद्यावच्छेदकयोरैक्यानुपपत्ते-रिति। अत्राधिकं सिद्धान्तलक्षणाक्षेपवेलायां वक्ष्यति।

मूलपृष्ठम् ३१६—व्याप्तिपक्षधर्मतावगाहितापेक्षायामिति। इदं 'न देशनीय' इत्यनेना-न्वेति। अन्यान्यधर्मावच्छेदेन व्याप्तिपक्षधर्मतावगाहितायामतिप्रसङ्गप्रसक्तेरेवाभावात्, एकधर्मावच्छेदेन तदवगाहितायां त्विष्टापादनादेवेतिभावः। गौरवं फलमुखमेवेति। उत्तेज-कीभूतसम्भावनाविरहविशिष्टतानिवेशनिबन्धनमित्यादिः।

मूलपृष्ठम् ३१९—अवच्छेदकगर्भमिति। अत्यन्ताभावाप्रतियोगित्वमपास्यात्यन्ताभाव-प्रतियोगितानवच्छेदकधर्मवत्त्वं केवलान्वयित्वमाहुः। नानाभूतानामपि प्रत्येकमेकत्वादिष्टा-पत्तिमाक्षिप्य व्याचष्टे। नानैकं घटभिन्न इत्यादि। रूपान्तरेण नानात्वोपगमात्रेण

* अत्र पृष्ठे मूले प्रवर्ततेत्यस्याग्रे 'धूमकालमन्तर्भाव्य चेदुक्तमावर्तते' इति पाठस्त्रुटितः।

सार्वज्ञ्यापत्ति र्नेसम्भवति' 'यतस्तदपी'त्यादिना तस्याः परिहृतत्वात्, अतः 'तर्हि' इति 'ग्रहणा'-दिति च पदद्वयं भेदभेदिनां सर्वेषामपि सङ्ग्रहार्थं च व्यक्तिभेदस्येतिपदमन्यथा व्याचष्टे तर्हि=तथापीत्यादिना । विशेषणज्ञानविधया । नतु सामान्यज्ञानात्मकप्रत्यसत्तिविधया ।

मूलपृष्ठम् १२०—भासमानवैशिष्ट्यीयेत्यादि । यथाश्रुतेऽस्मिन् घट इति ज्ञाने द्रव्यत्वस्य प्रकारतावारणायाद्यं भासमानत्वम्, द्र०त्वप्रतियोगिकत्वविशिष्टसमवायस्य तत्राभानात्, प्रतियोगी दण्ड.पुरुष इत्यादौ दण्डादेः प्रकारतावारणाय वा तत् । दण्ड-पुरुषसंयोग इत्यादौ दण्डादेः प्रकारतावारणाय तु द्वितीयं भासमानत्वम् । समवायादेरिव तदीयप्रतियोगित्वानुयोगित्वयोरपि विशिष्टबुद्धिविषयत्वमिति मतेन चेदं लक्षणम् । दण्डी पुरुष इत्यत्र भूतलेऽपि दण्डस्य प्रकारत्वं मा भूदिति प्रथमः सम्बन्धः, एतेन तृतीयवैशिष्ट्यघटक-स्य स्वाश्रयतद्धर्मिविषयकत्वस्य फलमप्युपादर्शि। अन्यथा वैशिष्ट्यं संसर्गतयाऽवगाहमानं दण्डी पुरुष इतिज्ञानं प्रतियोगितां संसर्गतयाऽवगाहमानं तु दण्डि भूतलमिति ज्ञानञ्चादायोक्तरो-षतादवस्थ्यात्, दण्डी पुरुष इति ज्ञानीया या प्रकारता सा दण्डि भूतलमिति ज्ञानीयाऽपि व्यवहृता स्यादितियावत् । परन्तु तादृशव्यवहारसदसत्त्वयोर्वैमत्यं शक्यमुत्थापयितुमित्यन्यत् । भ्रमेऽङ्गीकस्यानिर्वचनीयस्य वा वैशिष्ट्यस्य धर्मिविशेषानुयोगिकत्वाभ्युपगममते भ्रमीया प्रकारताऽपि सङ्गृह्यते लक्षणेनैतेन, मतान्तरे तु प्रमीयप्रकारताया एवेदं लक्षणं द्रष्टव्यम् । पुरुषनिष्ठसंयोगवान् दण्ड इत्यत्र दण्डस्य प्रकारतावारणाय स्वीयसांसर्गिकविषयताश्रयत्वेति । एतेन तृतीयवैशिष्ट्यघटकप्रथमसम्बन्धोऽपि व्याख्यातः, नहि दण्डी पुरुषइति ज्ञानीया दण्डप्रकारता प्रतियोगितासम्बन्धेन पुरुषनिष्ठसंयोगवान् दण्डइति ज्ञानीयेति द्वितीयवैशिष्ट्य-घटकतज्ज्ञानपदेन पुरुषनिष्ठसंयोगवान् दण्ड इति ज्ञानं नोपात्तं स्यादिति हि तृतीयवैशिष्ट्यघटक-प्रथमसम्बन्धफलम् । दण्डी पुरुष इति ज्ञानस्य संयोगीयप्रतियोगित्वमादायैव दण्डप्रकार-कत्वव्यवहारो नत्वन्यथेति भावेन स्वीयत्वेति । स्वनिष्ठसंयोगप्रतियोगित्वसम्बन्धेन पुरुष-प्रकारके पुरुषे दण्ड इति ज्ञाने दण्डस्य प्रकारतावारणाय प्रतियोगितायां सांसर्गिकविषयताश्र-यत्वं विवक्षितम्, यद्यप्युक्तज्ञाने प्रतियोगित्वं संसर्गतयैव भाति तथापि न संयोगात्मकवैशि-ष्ट्यीयसंसर्गतया, अपि तु पुरुषसम्बन्धघटकतया, संसर्गविधया भासमानवैशिष्ट्यीयत्वं तु संसर्गतायां स्ववृत्तिसांसर्गिकविषयतानिरूपकत्वेत्युत्तरसम्बन्धमहिम्ना तात्पर्यत एव लब्धव्यम्, प्रतियोगितात्वातिरिक्तधर्मानवच्छिन्नत्वं वा सांसर्गिकविषयतायां वक्तव्यम्, उक्तस्थले तु प्रति-योगितात्वातिरिक्तो धर्मः स्वनिष्ठसंयोगीयत्वाख्योऽप्यवच्छिनत्ति प्रतियोगितानिष्ठसंसर्गतामित्य-दोषः । इन्द्रियाप्रतियोगिकत्वादिति । नहीन्द्रियस्य स्वजन्यज्ञानविषयसामान्यवत्त्वसम्ब-न्धः सामान्यज्ञानस्येन्द्रियप्रतियोगिकतामर्पयेत्, न वा स्वजन्यत्वसम्बन्धोऽपि, तत्र हि जन्य-त्वस्य निरूपकविशेषसापेक्षतया सप्रतियोगिकत्वं व्यवह्रियतां न तु तद्घटितसमुदायस्य, नह्ययं कश्चिदतिरिक्तोऽखण्डः, किन्तु स्वं जन्यत्वं ज्ञानं विषयत्वं सामान्यञ्चेत्येतावन्मात्रमेव, अतएव निष्प्रतियोगिकपरम्पराणां संसर्गता मनोराज्यविलसितम्, विषयत्वं च न सविषयकान्यस्य सम्बन्ध इत्युक्तमेव । घटकापेक्षया समुदाये यदि किञ्चिद्वैचित्र्यमानुभविकमुपपाद्यं तर्हि ज्ञानाकारतां विना न काचिद्गतिरिति दर्शितं दर्शनसर्वस्वादौ । प्रत्यासत्तिपदेन न सम्बन्धो विवक्ष्यते, अपि तु द्वारमात्रमित्यपि मनोरथमात्रम्, इन्द्रियस्य दूरदेशस्थकालान्तरस्थैरसम्बन्धे तादृशविषयेषु प्रत्यक्षत्वस्य चाप्रामाणिकत्वे कचिदिन्द्रियद्वारत्ववाचोयुक्तेरप्रामाणिकत्वात् ।

मूले यथाश्रुतं व्याप्तिग्राहकपदं व्यर्थम्, इन्द्रिसहकार्यनुक्त्या न्यूनता चेत्यालोच्यान्यथाव्याख्यातुमवतारयति नन्वेवं व्यभिचारज्ञानेत्यादि ।

मूलपृष्ठम् ३२२–नैवाग्रमित्यादि । आदावन्ते च वस्तुनोऽभावेन मध्येऽप्यसत्त्वमिति तावदक्षरार्थः, आदावन्ते चाभावेऽपि वस्तुनस्तत्कारणस्य पूर्वं सद्भावेन तद्बलादुत्पत्तिसम्भवेन वस्तुनः सत्त्वशङ्कायां तु कारणस्याऽप्युक्तरीत्याऽसत्त्वप्रसङ्गवारणाय कारणधाराया उपगन्तव्यत्वेनानुमानप्रामाण्यानिर्वाच्यताधीनकार्यकारणप्रवाहानिर्वाच्यतापर्यन्तं तात्पर्यमुपेतव्यमित्याशयः । विषयसत्त्वपर्यवसन्नस्यापादितत्वेनेति । विषयसत्त्वस्यापादने तस्योभयत्राविशिष्टताप्रतीत्या न सामग्रीभेदकत्वेनाशङ्कनीयतेत्यग्रे व्यक्तोऽभिप्रायः ।

मूलपृष्ठम् ३२२—सामानाधिकरण्यांशे भ्रमत्वस्थलापेक्षया व्यापकतांशे भ्रमत्वस्थलानां बाहुल्यमालोच्याह अथवा हेतुमन्निष्ठेत्यादि ।

मूलपृष्ठम् ३२६–निरुक्तं सामानाधिकरण्यमिति । तयोरन्वयोव्याप्तिरित्यस्य व्याख्याने निरुक्तम् । कथंचिदस्येति । अधिकरणत्वेन निवेशस्यावश्यकत्वेन तन्निष्ठप्रकारतानिरूपितविशेष्यतायाः व्यक्तिविशेषनिष्ठाया विवक्षायां विनिगमकाभाव इत्यरुचेः कथञ्चिदित्युक्तम् ।

मूलपृष्ठम् ३२८–तज्जन्यत्वप्रतीतये इति । पर्वतीयधूमे पर्वतीयवह्निजन्यत्वान्यथानुपपत्तेः प्रागुक्ततयाऽत्र तत्पदद्वयेन पर्वतीयवह्निपरामर्शः । अपेक्षणीयेति । तथा चार्थापत्तिजनकज्ञानेऽपि पर्वतीयवह्निभानं ध्रुवमितिभावः । यथाव्याख्यातद्वितीयकल्पस्येति । धूमे वह्निजन्यत्वमनुपपन्नं सद्वह्न्यभाववद्वृत्तित्वाभावमानयतीत्येवं तादृशवृत्तित्वसामान्याभावाघटिताव्यभिचारावगाहित्वमिति द्वितीयविकल्पार्थः प्रागुपवर्णितः ।

मूलपृष्ठम् ३२९–सहकारिता शक्यवचनैवेति । तथा चानुमितावेव लाघवज्ञानस्य सहकारितामाश्रित्याप्यनुमित्यतिरेको नोपगन्तव्य इति भावः । स्मृतेरेवेति । अन्यथा संस्कारद्वाराऽनुभवकरणकत्वेन प्रत्यक्षत्वं न स्यात्प्रत्यभिज्ञायाः, नव्यै ज्ञानाकरणकज्ञानस्यैव प्रत्यक्षत्वाभ्युपगमात् । एतन्मतालोचनं शारदायां प्रत्यभिज्ञानिरासप्रस्तावे पुरा कृतम् । व्यभिचार इति वाच्यमिति । व्यभिचारो मूलोक्ततर्के । प्रतियोग्यग्राहकत्वादिति । प्रतियोगितद्व्याप्याघटितायाः प्रतियोगिग्राहकसामग्र्याः सत्त्वे हि यदि स्यादुपलभ्येतेति प्रसङ्गप्रवृत्तिः, वह्निविरहवद्वृत्तित्वरूपप्रतियोगिनस्तु ग्राहकं न व्यवहितादिदेशावृत्तित्वं किं तु सन्निकृष्टत्वमिति भावः ।

मूलपृष्ठम् ३३१–तत्रानुकूलत्वेत्यादि । एतद्व्याख्यानं चतुर्थे तर्काभासनिरूपणशारदायां द्रष्टव्यम् । अलीकत्वं च कालसम्बन्धित्वाभाव इति । न च ब्रह्मण्यतिव्याप्तिः, तत्राविद्यकस्य कालसम्बन्धित्वस्य सत्त्वात्, न च तस्य मिथ्यात्वेन तदभावोऽपि ब्रह्मण्यस्तीति दोषतादवस्थ्यम्, प्रतियोगिव्यधिकरणस्य कालसम्बधित्वाभावस्य विवक्षितत्वात्, न च तथाऽपि शुद्धे ब्रह्मण्यतिव्याप्तिरस्त्येव; वस्तुतः शुद्धस्यैवाविद्यादशायां कालसम्बन्धि-

त्वस्योक्तत्वात्। अथवा प्रकृतापादकेऽलीकत्वस्थाने कालसम्बन्धित्वाभावो वक्तव्यइत्यर्थः। एवं च नेदमलीकलक्षणपरमित्यदोषः। निराबाधमिति। इदमुपलक्षणम्, आपादके उक्तविशेषणदानेऽपि वह्न्यसमवहितजन्ये घटादावापादकस्यैवाभावेन व्यभिचाराभावात्। अत एवोभयपक्षसाधारण्येनाह पक्षे त्वित्यादि। अपाद्यप्रतियोगिकुक्षौ तादृशविशेषणकल्पे साध्यपदेनापाद्यं शक्यग्रहम्, आपत्तिदशायां पक्षे तस्य साधनार्हत्वाभावेऽप्यारोपात्मकसिद्धिविषयत्वसत्त्वात्। वह्न्यसमवहिताजन्यत्वस्य तत्र निश्चितत्वेन विशेषणीयत्वादित्यन्वयः। तथाचेष्टापत्तित्वाभावेन सत्तर्कतया विपर्ययपर्यवसानमेवेतिभावः। अत्रैवकारो व्युत्क्रमान्वयं सहताम्। आपादके तादृशविशेषणकल्पे तु साध्यपदं स्वरसप्राप्तार्थकमेव, विपयर्यपर्यवसानवेलायामापादकाभावरूपं साध्यं विशेषणाभावमादाय न सङ्गमनीयं किन्तु विशेष्यस्य वह्न्यजन्यत्वस्यैवाभावमादायेति यथास्थितक्रम एवैवकार इति। अत्र कल्पेचाग्रे नान्तरीयकवह्निके घटादौ शङ्कासमाधानयोरुपलक्षणत्वं द्रष्टव्यम्। तथाहि—विशिष्टाभावसमन्वयानुपपत्तेरिति। आपादकविरहानुपपत्तेरप्युपलक्षणमिदम्। प्रतियोगिकुक्षौ निवेशेनेति। आपादके विशेषणीयताऽप्युपलक्षणीयाऽत्रेति।

मूलपृष्ठम् ३३३–न नः सम्प्रतिपत्तिरिति। स्थूलदृशां सम्भावनानायत्तविजातीयव्यवहृतौ सत्यामपि सूक्ष्मदृशामुक्तवैजात्यमाकलयतां न सेति भावः। अधिकमेतत्प्रकरणोपक्रमे राजहंसे दर्शितम्।

मूलपृष्ठम् ३३५– शङ्कनीय एवेति। तथाचाबाधानिर्णयेन न प्रमात्वनिर्णयसम्भव इति भावः।

मूलपृष्ठम् ३३७–स्वक्रियायामपीति। क्रिया=कृतिः।

मूलपृष्ठम् ३३८–तद्दर्शने=प्रवृत्त्यभावव्याप्तिदर्शने।

मूलपृष्ठम् ३४०–षष्ठ्यर्थो निष्ठत्वमिति। ननु निष्ठाशब्दो भावप्रत्ययान्त इति निष्ठा षष्ठ्यर्थ इत्येव वक्तव्यम्, यद्यप्यातश्चोपसर्गे इत्यङ् 'स्थागापापचो भावे' इति क्तिना बाध्यते इति निष्ठितिरित्येव स्यात्प्रयोगः, तथापि पूर्वपरावरेत्यादिसूत्रे व्यवस्थायामिति ज्ञापकात्संस्थादिशब्दवन्निष्ठेत्यप्यनुरोद्धव्य एव शब्द इति चेत्सत्यम्, तथापि स्वार्थे तद्धिते 'त्वेचेति' ङ्यापोर्वैकल्पिकह्रस्वविधानसाहाय्येन निष्ठत्वमित्यपि सम्भवत्येव प्रयोगः। किं च सुपि स्थ इति कर्तरि के नितिष्ठतीति निष्ठस्तस्य भावो निष्ठत्वमित्यपि सम्भवति साधुताप्रकारः। एतेन नव्यन्यायग्रन्थेषु बहुलं दृश्यमानोऽयं प्रयोगः समर्थितः।

मूलपृष्ठम् ३४१—नियतान्वयविवक्षाफलं वह्निव्याप्यत्वज्ञानस्येति। नियतव्यतिरेकविवक्षाफलं वह्निव्यतिरेकेत्यादि। विशेषदर्शनविधया विरोधित्वविवक्षाफलं वह्निजन्यत्वव्याप्यत्वज्ञानस्येत्यादि। अनुमित्यनौपयिकत्वादिति। न च यद्धर्मावच्छिन्नविशेष्यताकत्वं व्याप्तिग्रहस्य तद्धर्मप्रकारेण हेतौ पक्षधर्मताज्ञानस्यानुमित्यौपयिकत्वं न तु तादृशज्ञानयोरेकव्यक्तिविषयकत्वमपि नियामकम्, एवंच पर्वतीयधूमनिष्ठस्य सामानाधिकरण्यस्य सामान्यप्रत्यासत्तितिरस्कारपक्षेऽग्रहेऽपि न क्षतिरिति वाच्यम्, एवं हि वह्निव्याप्यधूमवान् पर्वत

इति परामर्शस्य भ्रमत्वप्रसङ्गात्, पूर्वं गृहीतव्याप्तेः पर्वतीयधूमावृत्तित्वात्, न चेष्टापत्तिः, अनुभवविरोधात्, न च तादृशपरामर्शः कस्याऽपि नोदेतीति प्राभाकरादिभिरपि शक्यं वक्तुम्, सर्वत्र तदनादरेऽपि क्वचित्तत्सम्भवात्।

मूलपृष्ठम् ३४२—सामानाधिकरण्यवत्त्वानिति। 'तसौ मत्वर्थे' इति भत्वेन पदत्वबाधात् सामानाधिकरण्यवद्वानिति न भवतीति भावः। वृत्तित्वविशिष्टवद्धूमेति। धूमत्वोल्लेखो हि नोचितः, धूमत्वज्ञानस्यापेक्षणप्रसङ्गात्, अत एवोपनयवाक्यमपीत्थमेव प्रयोक्तुमुचितम्, अन्यथांऽशे निराकाङ्क्षत्वप्रसङ्गाच्चेतिभावः। एतेनैकधर्मिविशेषणतेत्यादि। अत्र कल्पेऽपि सामानाधिकरण्यस्योभयान्तर्भावेन व्याप्ते र्नानात्वप्रसङ्गप्रयुक्तं तु दूषणं स्पष्टमेव। मा भूदिति। धूमत्वस्य वह्निसामानाधिकरण्यन्यूनवृत्तित्वात्। व्यभिचारिण्यतिव्याप्तिवारणाय यावदिति साध्यासामानाधिकरणविशेषणम्। सम्बन्धिताघटितत्वस्येति। तादात्म्यप्रमासङ्ग्रहाय तत्सम्बन्धितावति तत्प्रकारकत्वं तत्प्रमात्वमिति वक्तव्यम्, एवमन्यसम्बन्धेन तद्वति सम्बन्धान्तरेण तत्प्रतीतेः प्रमात्ववारणाय तद्वत्ताप्रयोजकसम्बन्धावच्छिन्नप्रकारताकत्वोक्तावपि सम्बन्धत्वप्रवेशः। समवायत्वादिना प्रवेशेऽपि तस्य नित्यसम्बन्धत्वादिरूपतया दोषः, न च शब्दानुगमोऽपि प्रागेव त्वर्थानुगम इति।

मूलपृष्ठम् ३४३—अनवस्थापत्तेरिति। प्रतियोगिताघटितत्वात्। यदभावेतिकर्मधारयः, घटाभावाधिकरणे कचित्पटासत्त्वे तादृशाधिकरणतायां पटत्वावच्छिन्ननिरूपितत्वाभावेन पटस्यापि घटो नास्तीत्यभावप्रतियोगिता स्यात्, यदि सामान्यविवक्षा न स्यात्, तद्विवक्षायां तु घटाभावाधिकरणतासामान्ये पटाधिकरणनिष्ठापि घटाभावाधिकरणताऽन्तर्भवत्येव, तत्र च पटत्वावच्छिन्ननिरूपितत्वस्यैव सत्त्वेनादोष इति।

सावच्छिन्नावच्छेदकत्वीयेति। तद्दण्डं सद्व्यक्तितयोपादाय हेतुमति तद्व्यक्तिमान् नास्तीति गृह्यमाणाभावप्रतियोगितावच्छेदकतां साध्यतावच्छेदके वर्तते, तद्व्यक्तेः स्वरूपतो भानेनेतरानवच्छिन्नत्वसत्त्वेनोक्तसम्बन्धस्य व्यधिकरणत्वाभावादिति मा भूद्दोषतादवस्थ्यमिति सावच्छिन्नेति विशेषितम्। ननु नव्यनैयायिकानां नायं प्रयोग उचितः, अवच्छिन्नेत्यनेनैवाभीष्टार्थलाभसम्भवात्, अवच्छिन्नेन = अवच्छिन्नत्वेन सहेत्यर्थे भावप्रधाननिर्देशगौरवात्, अतएव तत्र तत्रानवच्छिन्नेतिवक्तव्ये निरवच्छिन्नेत्यप्यसुन्दरम्; मैवम्, अवच्छिन्नैः सहेति सावच्छिन्नम्, सह वर्तनं च प्रायः सजातीयानामिति तात्पर्यतोऽवच्छिन्नत्वमेवायाति, एवमवच्छिन्नेभ्यो निष्क्रान्तमवच्छिन्नसमुदायबहिर्भूतं निरवच्छिन्नमित्यर्थतोऽनवच्छिन्नत्वं लभ्यत इति नासाधुता, नह्यौत्सर्गिकैकवचनेनैव विग्रहो न्याय्य इति न्याय्यम्, शब्दवृत्तेस्तात्पर्यमनुरुन्धानाया एवानुरोद्धव्यत्वात्। प्रतियोगितावच्छेदकत्वाभाव इति। घटो नास्तीत्याभावप्रतियोगितावच्छेदकता साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नापि न सावच्छिन्नेति व्यधिकरणस्वादृशसम्बन्धः, एवं तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकता सावच्छिन्नापि न साध्यतावच्छेदकतावच्छेदकेतरान-

वच्छिन्नेतिं तेन सम्बन्धेन तदभावोऽपि सुलभः। प्रसिद्धिस्तूक्तसम्बन्धस्य हेत्वनधिकरण-गतस्य दण्डी नास्तीत्यभावस्य प्रतियोगितावच्छेदकतायाम्।

मूलपृष्ठम् ३४४—विवदन्त इति। प्रमेयत्वस्य प्रतियोगितानवच्छेदकत्वेऽपि तदव-च्छेदेन प्रतियोगित्वाभावस्याभावात्, अन्यथा क्वापि प्रमेये प्रतियोगित्वं न स्यात्। स्वावच्छेदकतात्वेति। प्रतियोगितानिरूपितसंसर्गता स्वम्। स्वनिरूपितेति। साध्यता स्वम्। विवक्षणीयतयेति। प्रतियोगितायामित्यादिः। अनवस्थानादिति। संयोगत्ववृत्ति-त्वविशिष्टावच्छेदकता संयोगत्वे एव पर्याप्तेत्यनुभवेन संयोगसमवायाभ्यां वह्न्यभावोपादान-सम्भवेनेतरवारकपर्याप्तिनिवेशस्यादरणीयतयाऽनवस्थानादित्यर्थः। अधिकं स्मृत्यन्यत्वखण्डन-शारदोदितदिशाऽध्यवसेयम्। स्वावच्छेदकसम्बन्धावच्छिन्नत्वेति। समवायेन संयोगत्व-विशिष्टं यत्, तस्य साध्यतावच्छेदकसम्बन्धत्वे स्वाश्रयप्रतियोगिकत्वादिना सम्बन्धेन संयोगत्व-विशिष्टो यः समवायः, तेन सम्बन्धेन वह्न्यभावमादायाव्याप्तिर्माभूदिति प्रथमः सम्बन्धः, तत्रावच्छेदकतयोः सामानाधिकरण्येऽपि भिन्नभिन्नसम्बन्धावच्छिन्नत्वात्। समवायेन द्रव्य-त्वादिसाध्यतास्थले स्वरूपसम्बन्धेन तदभावमादायाव्याप्तिर्माभूदिति द्वितीयः सम्बन्धः, तत्र स्वरूपसम्बन्धत्वसमवायत्वे भिन्ने एव तत्तदवच्छेदकताधिकरणे, अवच्छेदकतावच्छेदकस्तु स्वरूपसम्बन्ध एवोभयत्र। किञ्च स्वावच्छिन्नेति। इदं प्रतियोगितान्वयि। स्वं साध्यता-वच्छेदकम्। हेतुतावच्छेदकनिष्ठमिति। वह्निमान् धूमादित्यत्र धूमत्वनिष्ठा या वह्निमद्वृत्तिता-वच्छेदकता तदन्या वृत्तितावच्छेदकता नास्ति धूमत्वे। धूमवान् वह्नेरित्यत्र तु वह्नित्वनिष्ठा या धूमवत्पर्वतादिनिरूपितवृत्तितावच्छेदकता तदन्याऽयोगोलकादिनिरूपितवृत्तितावच्छेदकताऽ-स्त्येव वह्नित्व इति नातिव्याप्तिः। नित्यः कृतकत्वादित्यादौ तु हेतुतावच्छेदके साध्यवद्वृत्तिता-वच्छेदकताया अप्रसिद्ध्यैव नातिव्याप्तिः।

मूलपृष्ठम् ३४५—अप्रामाणिकत्वादिति। घटप्रतियोगिकत्वघटितरूपेण संयोगादौ घटप्रतियोगिकत्वोपगमे आत्माश्रयोऽपि द्रष्टव्यः। किञ्चिल्लघुचन्द्रिकोक्तमनुसृत्य स्वमतमाह केचित्त्विति। नैतावता प्रागुक्तार्थस्य स्वानभिमतत्वं मन्तव्यम्।

मूलपृष्ठम् ३४६—न भूयेतेति। उक्तभेदनिश्चये घटे पटत्ववैशिष्ट्यावगाहनासम्भवात्। आपत्तेरभावादिति। अत्र घटोऽस्तीतिज्ञाने सति नीलोघटोऽत्र नास्तीतिज्ञानाभावापत्ते-र्जलेऽग्निर्नास्तीतिज्ञानस्येव जले द्रव्यं नास्तीतिज्ञानस्यापि प्रमात्वापत्तेश्च नीलघटेन शुद्धघटस्या-ग्नित्वविशिष्टेन च द्रव्यत्वविशिष्टस्याभेदसमानाधिकरणभेदस्वीकारेण वारणसम्भवादिति भावः। असम्भवपरिहारायेति। हेतुनिष्ठवृत्तित्वस्य हेतुस्वरूपत्वे तज्जन्यत्वानुपपत्त्याऽसम्भ-वः प्रसज्यते।

मूलपृष्ठम् ३४७—लक्षणसमन्वयादिति। एतेन स्वरूपसम्बन्धस्य हेतुतावच्छेदकत्व-स्थलेऽविरुद्धव्यभिचारिण्यतिव्याप्तिरपि ध्वनिता।

मूलपृष्ठम् ३४८—एकरूपेण = आर्द्रेन्धनत्वादिना। रूपान्तरेण = धूमवदवृत्तित्वविशि-

ष्टार्द्रेन्धनत्वादिना। पक्षावृत्तित्वे सतीति। अत्र मते पर्वतस्यार्द्रेन्धनवत्त्वे तत्पक्षकस्थले आर्द्रेन्धनं धूमसाध्यकवह्नावपि नोपाधिः, यथा ह्रदपक्षकस्थले वह्निसाध्यकधूमे वह्निसामग्री भवन्त्यप्युपाधिर्न पर्वतपक्षकस्थले। नोक्तदोष इति। न व्यञ्जनवत्त्वादावतिप्रसङ्गः। विशेषणदलाभावादिति। प्रकृतमते बाधितस्थले एवोपाधिः, नचात्र पक्षतयाऽभिमतव्यक्तिविशेषे पर्वते महानसे वा वह्निबाध इति तत्रोपाधिविरहाय यतितम्। नियम्यत्वनियन्तृत्वे भावयोरिति। यादृशी मते। विपरीते प्रतीयेते ते एव तदभावयोरिति शिष्टांशः।

मूलपृष्ठम् ३४९—तर्कानवतारदशायामिति। साधने साध्यव्याप्यतानिश्चायकस्य साधनाव्यापकशरीरजन्यत्वादौ साध्यव्यापकतानिश्चायकस्य च तर्कस्यानवतारदशायामित्यर्थः। न चोपाध्यभावेन साध्याभावसाधने शरीरविशेषणवैयर्थ्यम्; विशेषणवैयर्थ्यं हि न हेतुदोषः तत्सत्त्वेऽपि व्याप्तिपक्षधर्मतयोः सद्धेतुताव्यवहारप्रयोजिकयोर्निरुपप्लवत्वात्, किन्तु तत्राधिकाभिधायितया प्रयोक्तैवापराध्यति। किञ्च जन्यत्वाभावस्य शरीरजन्यत्वाभावाद्भिन्नतया तादृशाभावत्वयोर्वैयधिकरण्यान्न वैयर्थ्यशङ्कापि, स्वसमानाधिकरणलघुभूतधर्मान्तरघटितत्वं हि व्यर्थविशेषणत्वम्, अतएवाखण्डाभावघटकतया न वैयर्थ्यमिति तत्र तत्र तार्किकैरुच्यते।

मूलपृष्ठम् ३५०—साधनाव्यापकव्याप्यत्वस्येति। उपाधौ साध्यव्यापकत्वसन्देहे साध्ये उपाधिव्याप्यत्वसन्देहः, स एव साधनाव्यापकव्याप्यत्वसन्देहः, उपाधेः साधनाव्यापकत्वात्, धूमवान् वह्नेरित्यत्रार्द्रेन्धनस्य साधनाव्यापकस्य व्याप्यत्वमस्ति धूमे, अस्ति च साधनाव्यापकत्वमपि न तु तदभाव इति साधनाव्यापकव्याप्यत्वं साधनाव्यापकत्वव्याप्यम्। साधनाव्यापकत्वसन्देह इति। साध्ये इत्यनुषज्यते। ततश्चेति। साध्ये साधनाव्यापकत्वसन्देहाच्चेत्यर्थः।

मूलपृष्ठम् ३५१—पक्षे व्यभिचारसन्देह इति। पक्षान्तर्भावेण व्यभिचारसन्देह इत्यर्थः। व्यभिचारोन्नायकतया दूषकतामते चेदमिति। उपाध्यभावेन साध्याभावोन्नयनमिह व्यर्थम्, साध्याभावस्य पूर्वमेवावगतत्वादित्युपाधिव्यभिचारेण साधने साध्यव्यभिचारोन्नयनमेव युक्तम्। सद्धेतुताप्रयोजिके = सद्धेतुताव्यवहारप्रयोजिके।

मूलपृष्ठम् ३५२—सङ्ग्रहेऽपीति। साध्यसमव्याप्तत्वनिवेशे पक्षेतरत्वभेदस्य प्रयोजनाभावेन लक्षणेऽनिवेशनीयत्वादिति भावः। तदाह केवलस्येत्यादि। स्वविशिष्टेति। इदं विशेष्यतावच्छेदकावच्छिन्नेऽन्वेति। विपक्षेऽसंद्ध तत्वादिति। एतेनोक्तव्यावर्तकत्वलक्षणसमन्वयः सूचितः। केवलं विशेष्यं यदि विपक्षे वर्तेत विशिष्टं च न वर्तेत तदैव विशेषणस्य विपक्षाद्व्यावर्तकत्वम्, न तु विशिष्टस्येव केवलस्यापि विपक्षावृत्तित्वदशायाम्, वह्नेस्तु पर्वतावृत्तित्वादिविशिष्टस्येव केवलस्यापि विपक्षावृत्तित्वमित्याशयेनाह स्वविशेष्यतावच्छेदकेति। विपक्षवृत्तित्वं स्वविशिष्टस्य तद्धर्मावच्छिन्नस्याभावेऽन्वेति। तद्धर्मस्तु विशेष्यतावच्छेदकीभूतः। स्वं त्वत्र विपक्षव्यावर्तकं विशेषणं पर्यवस्यति। ह्रदादिकं त्विति। इदं 'ह्रदो निर्जलः कृतकत्वा' दित्यादौ वह्निरनुष्णः कृतकत्वादित्यादिना समानयोगक्षेमस्थले द्रष्टव्यम्, न तु ह्रदो वह्निमान्

धूमादिति पक्षधर्मताविरहस्थले, तत्र पक्षेतरत्वस्य साधनव्यापकत्वेनानुपाधित्वस्यानुपदमुक्तत्वात्। तद्व्यक्तित्वादिनेति। विशेष्यस्य पर्वतभेदस्य पर्वतभेदत्वेनोपादाने तस्य सखण्डतया पर्वतरूपविशेषणमादायोक्तदोषतादवस्थ्यं न स्यात्, तद्विशिष्टभेदस्यापि विपक्षगामित्वात्, अतोऽखण्डतद्व्यक्तित्वपर्यन्तानुधावनम्। तद्व्यक्तित्वविशिष्टस्यापि विपक्षगतत्वेऽपि तद्व्यक्तित्वं न स्वम्, तदीयविशेष्यतावच्छेदकाप्रसिद्धेः, स्वयमेव हि तद्व्यक्तित्वमिह विशेष्यतावच्छेदकम्।

मूलपृष्ठम् ३५३—साधनाव्यापकत्वनिष्ठव्याप्तिमिति। यावत्पदसमभिव्याहृतपदार्थतावच्छेदकं साधनाव्यापकत्वम्, यावदादिपदस्य स्वसमभिव्याहृतपदार्थतावच्छेदकनिष्ठव्याप्तिनिरूपकत्वबोधकत्वात्। अपि तु साधनवतीति। अस्योन्नायकपदार्थैकदेशे उन्नयनेऽन्वयः।

मूलपृष्ठम् ३५४—तदव्यभिचार इत्यत्र तत्पदार्थः साध्यत्वविशिष्टेति।

मूलपृष्ठम् ३५५—प्रत्यक्षसंयोगधर्मेति। प्रत्यक्षेतिधर्मान्वयि।

मूलपृष्ठम् ३५७—अनित्यत्वाद्युपाधिरिति। न च कृतकेऽपि ध्वंसे ध्वंसप्रतियोगित्वरूपानित्यत्वं नास्तीति न तत् कृतकत्वव्यापकमिति वाच्यम्, कालत्वाव्यापकत्वरूपानित्यत्वस्य विवक्षितत्वात्। प्रमेयत्वाद्यनात्मकमिति। प्रमेयत्वं हि न कचिद्विवादास्पदम्, निश्चितं च साधनव्यापकत्वेन, साध्ये विवादेन तदधिकरणवृत्तित्वविशिष्टप्रमेयत्वे विवादस्तु साध्यविवाद एव पर्यवस्यति, सर्वत्र चास्य सौलभ्येन मूले स्थलविशेषानुधावनं विफलमपि स्यादित्याशयेनैतदनात्मकत्वनिवेशः।

मूलपृष्ठम् ३५८-जनकत्वादिति। अदृष्टसमवायित्वमादायात्मनो दृष्टान्तता। बहिरिन्द्रियाप्रत्यक्षत्वस्येति। इदमात्माद्यन्तर्भावेण गृहीतयत्किञ्चिद्धर्मविशिष्टसाध्यव्यापकताकम्, स च धर्मो दाहजनकत्वम्। शुद्धसाध्यव्यापकत्वं तु नास्ति, गुरुत्वात्मकसाध्यस्य घटे सत्त्वेऽपि तत्रोपाध्यभावात्। गुरुत्वात्मकसाध्यस्येति। जनकतासामान्यस्य हेतुतया साध्येऽपि कार्यशब्देन कार्यसामान्यं ग्राह्यम्, तेन गुरुत्वस्य दाहानुकूलत्वाभावेऽपि न क्षतिरितिभावः। लैङ्गिकी वेति। रत्नकोषकृन्मते सत्प्रतिपक्षस्थले संशयात्मकानुमितिस्वीकारेण लैङ्गिकी, मतान्तरे तु कोटिद्वयोपस्थित्यनन्तरं मानसीति भावः।

मूलपृष्ठम् ३५९-उदरस्य पक्षत्वे इति। संयोगेनानले साध्ये इति तु द्रष्टव्यम्, पाकस्य हेतुता तु स्वाश्रयाश्रयत्वसम्बन्धेन। जन्यतासम्बन्धेनानले साध्ये तु पाकस्य पक्षता।

मूलपृष्ठम् ३६१—पृथिवीत्वस्य चोपाधित्वेति। ज्ञानातिव्याप्तिरेव दीयते न तु वस्त्वतिव्याप्तिरिति तु न विस्मर्तव्यम्, तेन पक्षातिरिक्तस्थले साध्यसाधनसम्बन्धव्यापकत्वग्रहमादाय दोषः, अन्यथा जलान्तर्भावेन व्यभिचारस्यातिस्पष्टत्वात्। अतएव स्वयमाह ननु वस्तुगत्येत्यादि।

मूलपृष्ठम् ३६२—जितञ्जैनैरिति। व्यर्थविशेषणतां दूषणतयोद्भावयता साकं कथायामित्यादिः। एवं च प्रकारान्तरेण परं पराजयोऽस्तु जैनानामिति भावः।

मूलपृष्ठम् ३६५—व्याप्तीनां नानात्वे का व्याप्तिरनुमितिनिष्ठव्याप्तिनिरूपिकेत्यत्र विनिगमनाभाव इति मूले आपाततः प्रतीयमानार्थस्य व्याप्तिनानात्वे लिङ्गलिङ्गिविशेषनियन्त्रितत्वोपगमेनापुष्टतामभिप्रेत्यान्यथा व्याचष्टे अनुगमाननुगमपक्षयोरिति ।

मूलपृष्ठम् ३६६—नह्याहार्यवृत्ताविति । इदन्तु ज्ञेयम्, आहार्यवृत्तेर्ज्ञानत्वोपगमेऽपि न वेदान्तिनां काचित्क्षतिः, ब्रह्मबोधस्यानाहार्यत्वेनाविधेयत्वोपपत्तेः, तदनुत्पादप्रयोजिकानां तदप्रामाण्यग्राहिकाणां वा बाधबुद्धीनां निरस्तत्वात् । अनुमितेरप्याहार्याया अनुपगमेन तत्रेच्छाजन्यत्वमप्रसक्तम् । बाधग्रहेण नोत्पत्तिः प्रतिबध्यते, किन्तूत्पन्ने ज्ञानेऽप्रामाण्यं ज्ञाप्यते इति निष्कृष्टमतेऽपि बाधग्रहकालीनाऽनुमितिः स्यात्परामर्शमहिम्ना, नत्विच्छामहिम्ना, तस्याः साधनसम्पादने एवोपयोगस्यानुपदमुक्तत्वात् ।

मूलपृष्ठम् ३६७-निवेदितं चैतदिति । वस्तुतः स्वतोऽनुभवस्य निर्विशेषस्यापि चिन्तामणेरिव यथावासनमेव प्रथनेनैकशेषस्य कर्तुमयुक्तत्वेन समानविषयकविजातीयज्ञानद्वयसामग्रीसंवलनदशायां तत्तद्धर्मावच्छिन्नमेकमेव ज्ञानमुत्पद्यते, त्रिपुटीभानवादिप्राभाकरनये आत्मानुमितिसामग्र्युत्तरमात्मविषयकत्वावच्छेदेनैवानुमितित्वप्रत्यक्षत्वावच्छिन्नमिव, युगपज्ज्ञानद्वयमेव वा, मनसोऽनणुत्वस्योपक्रमे एवानुक्रान्तत्वात्, विभिन्नविषयकनानाविजातीयज्ञानसामग्रीसंवलने तु तत्तद्विषयकत्वावच्छेदेन तत्तद्वैजात्यवत् । तथा च वासनामात्रमूलकप्रतिबध्यप्रतिबन्धकभावकल्पनां पुरस्कृत्य क्वचिदपि प्रत्यवस्थानमस्थाने । एतेन—सन्निकर्षमात्रस्य पूर्वापेक्षणोपगमे कस्यचिद्विशेषणविधया कस्यचिद्विशेष्यविधया च भाने किं नियामकम्, विशेषणज्ञानस्य कारणत्वे तु यस्य पूर्वं भानं तस्योत्तरज्ञाने विशेषणतया भानमिति शक्यते वक्तुमिति-निरस्तम्, तथाहि यस्य पूर्वं भानं तस्योत्तरज्ञाने विशेष्यतया भानमित्येव कुतो न स्यात्, तस्माद्वासनामात्रमूलकोऽयं विशेष्यविशेषणभावोपन्यासो न तु परीक्षोत्तीर्णः, किञ्च येन पूर्वं सन्निकर्षस्तस्य विशेषणतया भानमनुमन्यताम् । युगपत्सन्निकर्षेऽनुभूयते इति तु युगपत्तयोरनुभवो विशेष्यविशेषणयोर्न तु कस्यचित्पुरा पृथगपीत्यनेन तुल्यमिति सन्तव्यम् ।

पृथगनुमितिहेतुत्वमत इति । अप्रामाण्यग्रहाभावविशिष्टपरामर्शस्य कारणत्वे विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुकार्यकारणभावद्वयकल्पनप्रसङ्गादप्रामाण्यग्रहाभावस्य परामर्शस्य च पृथगेवं कारणत्वम्, तथा सति कार्यकारणभावद्वयोपगमसाम्येऽपि लघुतालिङ्गितं तदिति तावदुक्तमतस्य बीजम्, प्रकृते तत्पर्यन्तानुधावनं तु मतान्तरे सिद्ध्यालमकपरामर्शस्याप्रामाण्यग्रहाभावविशेषणशून्यस्य कारणतैव नास्तीति सिद्धेरप्रतिबन्धकत्वेऽपि नानुमितिप्रसङ्गः शक्य उद्भावयितुमिति कृत्वा । स्वातन्त्र्येण परामर्शस्य हेतुत्वे तु सिद्धेरप्रतिबन्धकत्वे तदात्मकपरामर्शात्प्रसज्यतेऽनुमितिरिति तद्वारणायाप्रामाण्यज्ञानाभावानामपि हेतुताया वाच्यत्वे साध्यव्याप्यहेतुमत्पक्षत्वात्मकविषयबाहुल्येन तावदंशेऽप्रमात्वग्रहाभावस्य विलक्षणीयतया सिद्धेः प्रतिबन्धकत्वमतापेक्षया महागौरवमिति भावः । गौरवसम्भावनायाः प्रतिबन्धकत्वमिति । 'न च सम्भाव्यमानम्, श्रौतेन निश्चयेन तन्निवर्तना'दिति प्रत्यक्षादिबाधोद्धारखण्डनपङ्क्तिस्थशारदाया राजहंसे व्याख्यातमेतत् ।

मूलपृष्ठम् ३७०—विषयतानिष्ठा घटावच्छिन्नेति । उक्तसम्बन्धिता स्वरूपसम्बन्धेनावच्छिन्ना, स च घटात्मक इति भावः । एवं च संसर्गविधयाऽत्रावच्छेदकत्वं घटेऽभिहितम् । धर्मविधयाऽपि तु विषयतात्वे उच्यमानमपि तद्घटे एव पर्यवस्यति, विषयतात्वस्य प्राचीनेन घटात्मकविषयत्वातिरिक्तस्यानभ्युपगमनीयत्वात् ; अन्यथा विषयत्वातिरिक्ताऽपि कुतो न स्यात् । न च विषयताया अनतिरिक्तत्वे घटनिरूपितसम्बन्धितैव विषयतानिष्ठा नास्तीति कुतोऽवच्छेदकचर्चेति वाच्यम्, व्यवहारेणोपहृतायास्तस्या अवश्यमुपपाद्यत्वात् । अतिरिक्तविषयतापक्षे तु विषयविषयिणौ द्वावेवेत्यत्र टीकायां विषयिपदार्थतया विषयसम्बन्धिनी विषयताऽपि संग्रहीतव्या ।

मूलपृष्ठम् ३७१—प्रतीत्यपर्यवसानतया प्रसिद्धैवेति । अनुपपत्तिर्हि प्रतीतस्य वा प्रतीतेर्वेति द्वयी, आद्या यथा धूमस्याग्निं विना, अपरा तु यथा जात्यवगाहनस्य व्यक्त्यवगाहनं विनेति । तदिदमुक्तमत्रैव प्रकरणे पुरा, जातिनिष्ठसमवायसम्बन्धावच्छिन्नप्रमीयप्रकारता तत्समवायिव्यक्तिनिष्ठविशेष्यतानिरूपितैवेति ।

मूलपृष्ठम् ३७२—न तूत्पद्य पुनरिति । अत्राधिकं प्रत्यक्षादिबाधोद्धारे 'बुद्धेर्विरम्य व्यापाराभावा'दिति खण्डनपङ्क्तिस्थशारदाया राजहंसे निवेदितम् । असम्भवादिति । प्रथमक्षणे उपपादकस्यानुपगततया तेन विनोपपाद्यानुपपत्तेः । ततः प्रागेवेति । विरम्य व्यापारपक्षे प्रतीत्यनुपपत्तिस्त्वयक्तैव भवति, प्रतीतानुपपत्तिस्तु प्रकृतेऽसम्भावनीयैव, तथाप्युपगमे तूपपादकस्य ज्ञानं परं पश्चाद्भवतु सत्ता तु प्रागेव प्रसज्यते, घटत्वपृथिवीत्वादिस्थले उपपाद्योपपादकयोः क्रमासम्भवेऽपि प्रकृते तयोरनित्यतया क्रमिकत्वप्रसङ्गः कुतो न स्यादिति भावः । साध्यावगाह्यनुमितेरित्यादिरिति । अत्र व्याप्तिज्ञानजन्यतयाऽनुमितित्वोक्तिः, वस्तुतस्तु धर्मिविशेषाविषयिकाऽनुमितिर्नानुभूयते इत्यनुपदं वक्ष्यति । अर्थापत्तित्वापत्तेरित्यर्थ इति केचिदिति । प्रस्तुतावगाहितयोरुपपाद्योपपादकभावस्यैकज्ञानान्तर्भावेनोपगमे दूषणमिदम्, ज्ञानद्वयान्तर्भावेनोपगमे वा, आद्ये निरसनीयपक्षे प्रकारभेदसूचकवाकारप्रयोगासङ्गतिर्मूले, चकारस्यैव प्रयोक्तव्यत्वात् । अनुमित्युच्छेदापत्तिरेव चैवं वक्तव्या, न तु मानान्तरत्वापत्तिः, क्वचिदप्यनुमित्यप्रसिद्धौ तदन्यमानत्वापत्तेरनौचित्यात्, मानान्तरताशब्दाच्च स्वरसतः क्लृप्तप्रमाणसामान्यातिरिक्तता प्रतीयते, नचेयमर्थापत्तौ । एतेन द्वितीयोऽपि कल्पोऽपाकृतः । किञ्चात्र द्वितीयज्ञानस्यार्थापत्तित्वापत्तावपि प्रथमज्ञानस्य का दशेत्यत्र मौनितया मूलस्य न्यूनत्वप्रसङ्गः । न च भवतोऽपि द्वितीयज्ञाने किञ्चिदनभिधानेन न्यूनता; द्वितीयत्वेनाभिमतं वस्तुतश्च प्रथममेव पर्वतो वह्निमानिति यज्ज्ञानं तस्यानुपदं टीकायां चर्चया मूलस्य तत्रोपयोजितत्वात् । अवगाहिताविशेषं विनाऽनुपपत्तिज्ञानजन्ये तु पर्वतो वह्निमानित्याकारकताया अनुपपन्नत्वात्, अवगाहिताविषयकत्वस्य तत्रावश्यकत्वात्, अतएव परतोऽतिप्रसङ्गादिति प्रतीके तथा व्याख्यातम् । उक्तानुपपत्तिज्ञानजन्ये त्ववगाहिताविशेषविषयके ज्ञानेऽर्थापत्तित्वमिष्टमेवेति कथं तदापत्तिः । अथ प्रतीतौ सत्यामप्यनुपपत्तिः प्रतीतस्यैवानुपपत्तौ पर्यवस्यतीति व्याख्यायतामग्रे भवता तथा, अत्र तु प्रतीत्यनुपपत्तिरेव निरसनीयेति पर्वतो वह्निमानित्येवाकारः, तत्र चार्थापत्तित्वं शक्यमापादयितुमिति चेन्न, प्रतीत्यनुपपत्तिपक्षे ज्ञानद्वयसम्भावनाया

निर्मूलतयैव निरसनीयत्वात्, न हि प्रमायां समवायेन जातिभानं तदाश्रयव्यक्तिभानं विनाऽनुपपन्नमिति तत्र जातिव्यक्तिविषयकं ज्ञानद्वयं जायते, न वा तत्रानुपपत्तिज्ञानजन्यत्वमपि, किन्त्वनुपपत्तिज्ञानं विनैव स्वभावत एव समवायेन प्रमीया जातिनिष्ठा प्रकारता तदाश्रयव्यक्तिनिष्ठविशेष्यतानिरूपिता भवति, एवं च प्रकृते पर्वतोऽग्निमानिति ज्ञाने न प्रस्तुतानुपपत्तिज्ञानजन्यत्वमिति कृतमनल्पजल्पेन।

मूलपृष्ठम् ३७१—इत्यादिकमेवेति । लक्ष्यीभूतपक्षधर्मताखण्डनं स्वरूपसम्बन्धेन हेतुतास्थलमादाय कृतमादिपदेन ग्राह्यम्। इत्यनुमानखण्डनशारदायां राजहंसः।

## उपमानखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ३७४—करणपक्षेऽसम्भवापत्तेरिति । प्रत्यक्षस्यैवोपमितिकरणत्वमतेनेदम्। शाब्दस्यापि तथात्वमते त्वव्याप्तिः। कस्यचिदिति पुरुषपरम्।

मूलपृष्ठम् ३७५—ननु केवलानुमितित्वस्यातिप्रसक्तत्वेऽपि साध्यात्मकसादृश्यविषयकानुमितित्वं सादृश्यविषयकत्वनियतमेवेत्यतिव्याप्तितादवस्थ्यमित्यत आह। व्यभिचारवारणायेति ।

मूलपृष्ठम् ३७७—स चायञ्चाभिन्नाविति मूलेऽभेदे द्विवचनानुपपत्तिस्तु न चोदनीया, रूपभेदेन रूपिभेदप्रतीतिदशायां तदुपपत्तेः, द्रव्यत्वेन रूपेण घटपटावभिन्नावितिवत्। भ्रान्तविपरीतेति । विपरीतत्वं संशयसाधारणमिति सामान्यम्, भ्रान्तत्वं तु विशेष इति तृणोलपन्यायेनान्वयः, प्रचलितो ह्ययं शब्दो निबन्धेषु, अथवा यतो भ्रान्ता=दोषघटितसामग्रीप्रयुक्ता, अतो विपरीतेत्यर्थः। एतेन सोऽयं नवेति भिन्नविशेष्यकसंशयस्याप्यनुपपत्तिप्रसक्तिसम्भवेन व्यधिकरणप्रकारकत्वमात्रं बाधितविषयकत्वमेव वा प्रत्यभिज्ञायां विवक्षणार्हम्, तच्चैकेनैव पदेन लभ्यत इति पदद्वयोपादानमसङ्गतमिति नाशङ्कनीयम्।

मूलपृष्ठम् ३८०—आपाततो लक्षणसङ्गमनेति । यथाश्रुते वाक्यार्थस्य साधर्म्यवैधर्म्यान्यतरात्मकतया विवक्षणेऽपि दोषतादवस्थ्येन तादृशविवक्षणस्याकिञ्चित्करत्वमित्याशयेनापातत इत्युक्तम्। यया रीत्या तादृशविवक्षा प्रकृतदोषनिवारिका सा त्वनुपदं परतो व्यक्ता।

मूलपृष्ठम् ३८१—सामानाधिकरण्येनेति । प्रवृत्तिनिमित्तपरिच्छेद इत्यन्वयः। साधर्म्यवैधर्म्यान्यतरसमानाधिकरणं हि प्रवृत्तिनिमित्तं परिच्छिद्यते।

मूलपृष्ठम् ३८१—ननु प्रमामात्रफलकत्वं निवेश्यम्, उक्तानुसन्धानं तु भ्रमफलकमपीति न दोष इत्यत आह प्रमामात्रफलकत्वस्येति । तत्र=लक्ष्यीभूतानुसन्धाने।

मूलपृष्ठम् ३८३—मूले व्याप्तत्वावगतमित्यत्र बहुव्रीहिविवक्षायां निष्ठान्तस्य पूर्वप्रयोगौचित्यम्, आहिताग्न्यादित्वकल्पने प्रबलप्रमाणानाकलनादित्यरुचेराह अथवा

तन्निरूपितेति। आर्थसमाजग्रस्ततयेति। तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः प्रयोजकसमाजायत्तस्तयोः समाज इति भावः। मानान्तरस्यापीत्यादि। मानान्तरस्य शक्तिप्रमाकरणत्वेऽपि तत्र कार्यताऽनुमितित्वादि नैवावच्छिद्यते, तत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकतया व्यभिचारवारणायावश्यं निवेशनीयतया पक्षसाध्यविषयिताया: कार्यतावच्छेदकघटकताया निष्फलत्वात्, एवमनुमित्यतिरिक्तस्थलेऽपि द्रष्टव्यम्। केवलं चानुमितित्वादिकं न संज्ञासंज्ञिसम्बन्धविषयकत्वनियतम्, भ्रम यनुमित्यादौ व्यभिचारादिति भावः। अनुमितिर्ग्राह्येति। अर्थापत्तिशब्दवदनुमितिशब्दोऽप्यत्र करणपरः। अन्यथा मूले जन्यतार्थकपञ्चमीपदाभिषिक्ततसिप्रयोगासङ्गतेः। यदि तु सार्वविभक्तिकस्तसिरिह तृतीयार्थे, स चाभेदः, तदा फलपरत्वमेवोक्तशब्दयोर्न तु करणपरत्वम्। 'उत्तरपदार्थैकदेशे एवान्वयेऽभेदार्थकत्वम्. धान्येन धनवानित्यादाविव, न तूत्तरपदार्थेऽन्वये' इति त्वप्रयोजकम्, प्रकृत्या चारु तदितिवत्प्रकृत्या चारुता तत्रेत्यपि व्यवहारात्। वक्तव्येति। नन्वनुपदमुक्तमनुमितित्वादिमात्रस्य कार्यतावच्छेदकत्वं तच्च न संज्ञासंज्ञिसम्बन्धविषयकत्वनियतमिति चेत्सत्यम्; तथापि परामर्शखण्डनशारदायामव्यवहितोत्तरत्वं निवेश्य कार्यकारणभावोपगमानां निरस्तत्वात्पक्षसाध्यादिविषयतानामनुमित्यादिनिष्ठकार्यतावच्छेदककोटौ निवेशौचित्यमित्याशयः।

मूलपृष्ठम् ३८४–खण्डनासम्भवादिति। उपमानस्य पृथक् प्रमाणतावादिना तस्य परार्थताया अनङ्गीकारादिति स्वार्थस्य तस्य स्वार्थे नैवानुमानेन चारितार्थ्यं वक्तुमुचितम्।

तर्केण विषयीक्रियमाणेत्यादिमूले विपर्ययविषयीकारोक्त्या स्वरसतः सत्तर्कताप्रयोजकं विपर्ययपर्यवसायित्वं प्रतीयते; किन्तु गौरवादेर्व्याप्त्यमूलकतयाऽप्रसङ्गात्मकत्वेन तथात्वासम्भव इत्यवेत्यान्यथा व्याचष्टे विपर्ययः स्वेतरस्याभाव इत्यादिना। अपाद्याभावव्यापकीभूताभावप्रतियोग्यापादककत्वं हि विपर्ययपर्यवसायित्वं प्रसङ्गात्मके एव सम्भवति, न चात्र गोसादृश्यं यदि गवयशब्दप्रवृत्तिनिमित्तं स्याद् गुरु स्यादिति तर्को गौरवापाद्यकतया कथञ्चिद्गौरवपदव्यवहारार्होऽपि समीचीनः, आपाद्यस्य पक्षे सत्त्वादेव. गोसादृश्यं यदि गवयशब्दप्रवृत्तिनिमित्तं स्याल्लघुसमानाधिकरणगुरु न स्यादिति तु न गौरवापादकको नापि गौरवापाद्यको येन गौरवपदव्यपदेशभाग् भवेत्, आपाद्यप्रतियोगिकुक्षौ गौरवस्य प्रविष्टतया कथञ्चिद्गौरवपदव्यवहार्यतोपगमेऽपि गोसादृश्यं न गवयशब्दप्रवृत्तिनिमित्तं लघुसमानाधिकरणगुरुत्वादित्येवं विपर्ययपर्यवसानं वाच्यम्, तत्र च गोसादृश्ये गवयशब्दप्रवृत्तिनिमित्तत्वाभावस्य गवयशब्दप्रवृत्तिनिमित्तत्वे आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकगोसादृश्याभावात्मकता वा तत्तुल्ययोगक्षेमता वेति सुष्ठु व्याख्यातं विपर्ययः स्वेतरस्याभाव इति। गवयत्वं यदि गवयशब्दप्रवृत्तिनिमित्तं न स्याद् गुरुसमानाधिकरणलघु न स्यात्, न चैवं तस्माद्गवयशब्दप्रवृत्तिनिमित्तं तदेव न त्वितरदिति तु न पृथग् विवक्षणीयमुक्तेनैव गतार्थत्वात्।

मूलपृष्ठम् ३८५–प्रवृत्तिनिमित्तत्वाप्रसिद्ध्येति। सादृश्यस्य सदृशपदप्रवृत्तिनिमित्तत्वेऽपि गोसादृश्यस्यार्थसमाजग्रस्ततया न कस्यचित्पदस्य प्रवृत्तिनिमित्तत्वमिति भावः। स्वघटितेति। तदितरेत्यत्र स्वेतरेति प्रयोगे इति भावः। गवयत्वग्रहणे त्विति। पूर्वकल्पे

त्वर्थशब्दो वस्तुसामान्यपरोऽपि प्रकृते शब्दे पर्यवसन्न आसीत्। स्वघटितबहुव्रीहौ तु स्वस्यैव विशेष्यतेति भावः। भावरूपजीवने लाघवेति। अर्थापत्तिखण्डनशारदायां प्राभाकरमतोपन्यासे द्रष्टव्यमिदम्। साध्याप्रसिद्धिरिति। गवयत्वप्रवृत्तिनिमित्तकत्वं साध्यम्।

इत्युपमानखण्डनशारदायां राजहंसः।

## शब्दखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ३८७—निरस्तत्वादिति। तथा चोपजीव्यनिरासं वक्ष्यमाणांश्च दोषान् मनसि निधाय किम्पदार्थपृच्छाया गर्भीभूत आक्षेपः। निरस्तप्रमाणानि दुर्वचत्वे दृष्टान्तीकर्तुमपि शब्दः। सङ्गतिस्त्ववसरात्मा। नचैतदेवेति। एतत् = तादृशज्ञानप्रयोजकवाक्यत्वम्।

मूलपृष्ठम् ३८८—युधिष्ठिरवाक्यपदेनालक्ष्यवाक्योपादानेऽव्याप्तिस्थलीभूतवाक्यत्याध्याहर्तव्यतागौरवासहिष्णुतयाऽऽह अथवेति। यत्र क्वचिदर्थे इति। वह्निनेति सिञ्चतीत्यनयोः प्रत्येकं स्वार्थे प्रमाणत्वात्। आर्थसमाजेति। तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः प्रयोजकसमाजायत्तस्तयोः समाज इति भावः। प्रमाणत्वव्यवहारापत्तेरिति। एवं च शाब्दत्वे तावत्प्रमितिनिष्ठत्वविशेषणव्यर्थतैवेति भावः। शाब्दत्वे प्रमावृत्तित्ववैशिष्ट्यविवक्षापि न श्लाघनीया, प्रमात्वस्यैव जन्यतावच्छेदकत्वाभावस्योक्ततया तद्घटितरूपेण जन्यताया असम्भवात्, प्रमितिनिष्ठत्वस्य जन्यत्वविशेषणत्वेऽपि शाब्दत्वेन जन्यताया अतिप्रसक्ततया बाधितार्थकवाक्ये शब्दप्रमाणत्वव्यवहारप्रसङ्गोऽस्त्येव तावत्, यावज्जन्यताजनकतावच्छेदकयोरनतिप्रसक्तयोः प्रदर्शनं न क्रियते, प्रमाणस्वरूपानिर्णये हि कथं तत्फलीभूतप्रतीतेः प्रमात्वं प्रतिवादिनं प्रति वक्तुं शक्यते इति तु तत्त्वम्।

प्रमितित्वन्यूनवृत्तीति। न्यूनवृत्तित्वमत्र व्याप्यत्वं धर्मविशेषणम्, वस्तुगत्या घटवति घटप्रकारकानुभवत्वमनुमित्यादिसाधारणम्, तद्व्याप्यं तु शाब्दत्वघटितं वस्तुगत्या घटवति भूतलादौ घटप्रकारकत्वम्। व्याप्यत्वस्थाने सामानाधिकरण्योपादाने भूतलं घटवत्पटवच्चेति समूहालम्बनशाब्दे पटांशे भ्रमात्मके तादृशप्रमितित्वपटप्रकारकशाब्दत्वयोः सामानाधिकरण्यसत्त्वादतिव्याप्तिः, व्याप्यत्वं तु नास्ति, पटप्रकारकशाब्दत्वस्य पटवद्भूतलमित्यत्रापि सत्त्वेन तत्रोक्तप्रमितित्वविरहात्। एतेन तत्समानाधिकरणत्वे सति सत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं न्यूनवृत्तित्वमिह न विवक्षणीयमित्युक्तप्रायम्, उक्तदोषतादवस्थ्यात्।

मूलपृष्ठम् ३८९—अन्यथाऽसत्ख्यात्यापत्तेरिति। अन्यथा = गोत्वान्तरस्य भानोपगमे। तदुच्चरितवाक्ये शिक्षयितुरित्यादि। ननु शिक्षयितुर्भ्रमादीनां शुकादिवाक्ये जनकत्वाभावेऽपि परम्परयाऽपेक्षणीयतया प्रयोजकत्वसत्त्वाद्दोषाप्रयोज्यत्वघटितलक्षणे नायं दोष इत्यस्वरसादाह वाक्यत्वं चेति।

मूलपृष्ठम् ३९०—तत्र च मौनिश्लोके इति। मौनिनोऽप्रयोक्तृतया तदीयप्रमाजन्य-

त्वस्य तल्लिपिस्मारितवाक्येऽभावः। ईश्वरीयप्रमायास्तूपादानगोचरापरोक्षज्ञानत्वेन कार्यमात्रकारणता क्लृप्तैव। अश्रूयमाणं ग्रन्थस्थलिपिस्मारितवाक्यमात्रं चेह शक्यमुपलक्षयितुम्। अध्येतृप्रमायास्तु वाक्यस्मरणजन्यतया न वाक्यकारणत्वम्, तत्र हि वर्णानां पदानां वाऽध्येत्रा पूर्वानुभूततया तदानुपूर्वीविशेषात्मकवाक्यस्य लिपिक्रममहिम्नैव स्मरणमिति प्राचीनापि काचित् प्रमितिरध्येतृनिष्ठा नापूर्ववाक्यस्मारकलिपिस्थले शक्या कल्पयितुमिति तादृशवाक्यस्यानन्यगत्येश्वरप्रमामात्रशरणत्वमिति भावः। न द्वितीयस्त्वेनेति। नकारस्य दोष इत्यनेनान्वयो न तु गणित इत्यनेन्। कृत्वखत्वादिव्यापकेति। व्यापकत्वं व्याप्यत्वं च जातिविशेषान्वयि।

मूलपृष्ठम् ३१२—न चाव्यवहितोत्तरत्वमिति। तत्तदानुपूर्वीज्ञानाव्यवहितोत्तरशाब्दबोधे तत्तदानुपूर्वीज्ञानस्य कारणतोपगमे व्यभिचाराभावेऽपि वाक्यलक्षणे दोषोऽस्त्येवेत्याह राजसम्बन्धीति। अधस्तात्=परामर्शखण्डनशारदायाम्।

मूलपृष्ठम् ३१३—नाम्नो नामार्थत्वाभावादिति। नाम्नो नामेत्याकारकनामार्थत्वेऽपि विशिष्य हिमालय इत्याकारकनाम्नो हिमालय इत्याकारकनामार्थत्वं नास्ति, शब्दस्य स्वरूपेऽपि शक्तिरित्यत्र प्रमाणाभावात्, घटशब्दं शाब्दयामीत्यनुव्यवसायविरहात्, प्रागुपस्थितिमात्रेण शाब्दबोधे शब्दस्वरूपभानस्यालङ्कारिकादिसम्मतस्योपपत्तेः, अन्यस्यापि प्रागुपस्थितस्य भानप्रसङ्गस्तु शब्दे एवानुभवबलेन तथाभ्युपगमादरेण वारणीयः। तथा च हिमालयनामार्थस्य नगाधिराजनामार्थेन हिमालयो नगाधिराज इत्यादावभेदबोधोस्तु, न तु हिमालयो नाम नगाधिराज इत्यादौ नामपदसमभिव्याहारे वाचकत्वेनैव विवक्षास्थले, विशिष्यैव च व्युत्पत्तिविश्रान्तेरावश्यकत्वात्, नामात्वार्थत्वयोरनुगमाभावादिति। द्व्यक्षरं नामेति। मानभङ्गः पिनाकिन इति शिष्टांशः प्रसिद्धः। मान्त्रिकदृष्ट्यापीति। अत्र विस्तरो दर्शनसर्वस्वे द्रष्टव्यः। नित्यत्वं वेति। इच्छानिष्ठम्। मानाभावादिति। परम्परया विशिष्टबुद्ध्यभावात्सप्रतियोगिकत्वेनाननुभवाच्चेति भावः। विषयतायां तद्घटिते वा सविषयकान्यस्य सम्बन्धता न सम्भविनीति तु प्रकृतेऽधिकमपि वक्तुं शक्यते। वदन्तीति। अत्र यदि केनचिदिष्टापत्तिर्न शक्यते कर्त्तुम्, यदि चान्यथानिर्वचनासम्भवे एवागत्येश्वरेच्छोपासना न त्वन्यथेत्युत्तरं न सुन्दरम्, तदेदं खण्डनं सुन्दरं न त्वन्यथेति सूचयितुं वदन्तीत्युक्तम्। लोकेऽसम्भवग्रस्तमिति। सह सुपेति सूत्रे सहेति योगविभागेन स्वरविशेषार्थं वेदे 'पर्यभूषद्' इत्यादौ तिङन्तेनापि समासस्यादृतत्वाल्लोके इत्युक्तम्, दृष्टानुविधिश्छन्दसीति तत्र सुपो लुक्। अनुपदमिति। अन्यतमत्वखण्डनेनेति भावः। पचति भवतीत्यादेरिति। भवत्यादौ पचत्यादिकर्तृकत्वमादायात्रापि क्रियाकारकभावेनान्वयो महाभाष्यकारसम्मतः। व्यापारमुख्यविशेष्यकशाब्दबोधनये च तत्रादरणीये भवने विक्लित्त्यनुकूलव्यापारस्य कर्तृतां तत्र प्रतीयेतेत्युचितम्, न तु तादृशव्यापारवतः।

मूलपृष्ठम् ३१४—स्वघटकत्वेति। तद्घटकत्वं तद्वानितिविशिष्टवैशिष्ट्यबुद्धित्वा-

वच्छिन्नजन्यताकजनकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वं तद्वान्नेति भेदप्रतियोगितावच्छेदकत्वं स्वाविषयकप्रतीत्यविषयतरकत्वं वा स्वसाधारणमिति न द्वितीयसम्बन्धवैयर्थ्यम्, राम इति समुदायस्य स्वघटकत्वे स्वघटकपूर्वत्वाभाववत्त्वे च सत्यपि स्वघटकोत्तरत्वं नास्तीति न तस्य स्वान्तत्वव्यवहारप्रसङ्गः। राम इति समुदायः स्वघटकत्वस्वघटकोत्तरत्वेति सम्बन्धद्वयेन रेफोत्तराकारादावपि वर्तते न चासौ तस्यान्त इति तृतीयः सम्बन्धः। रामो गच्छतीत्यत्र राम इति समुदायः प्रथमातिरिक्तसम्बन्धद्वयेन गकारादावपि वर्तते, न चासौ तस्यान्त इति प्रथमसम्बन्धः। अत्र लक्षणे गच्छति राम इति पदसमुदायस्योक्तसम्बन्धैः सुब्वृत्तितया सुबन्तत्वप्रसङ्गद्वारा पदत्वव्यवहारप्रसङ्गो यदि नेष्यते तदा सुपतिरिक्तेन सुबुद्देश्यातिरिक्तेनाघटितत्वमपि वक्तव्यम्। सुबुद्देश्यातिरिक्तत्वं सुप्यपीति तद्घटितत्वेन दोषवारणाय सुबतिरिक्तत्वमुक्तम्। एवमग्रेऽपि पदकृत्यमूहनीयम्।

**परम्परया वेति।** सरितस्तीरे सरति ससीरी रसिकोऽसौ, सुवासितं वसनमानयेत्यादौ सरित्सुवासितादिपदघटितस्य वाक्यत्वोपपत्तये परम्परयेति, आधेयत्वकर्मत्वयोस्तत्र संसर्गतया भानमिति तीरादिविषयतया तु साक्षादेव निरूपिता क्रियाविषयता। सुप्तिङर्थस्य प्रकारतया व्यवधायकत्वे तु मृदु पचति उच्चैस्तिष्ठतीत्यादौ साक्षात्। **जनकपदेनेति।** कारकान्वितक्रियाशाब्दजनकेत्यत्र। **उत्कटीत्येति।** शुकाद्युच्चरिते वाक्यविशेषे केनापि व्युत्पन्नेनाश्रुतेऽव्याप्तिरिति प्रागुक्तम्। **द्वयोरपीति।** मूले सूत्रद्वयोपात्तयोरपीत्यर्थः।

मूलपृष्ठम् २६५—**कर्तृपदस्य लक्षणयेति।** सार्वधातुके इत्यनुवर्तमानेन कर्तरीत्यस्य सामानाधिकरण्येनान्वयोपपत्तये कर्तृपदस्य कर्तृवाचिपरत्वं लक्षणया। कर्तरीति सप्तम्या वाचकत्वं लब्ध्वा तत्र वैयधिकरण्येनान्वयसम्भवेऽपि कर्तृवाचकत्वं शपो वा तदन्यस्य सार्वधातुकस्य वेत्यत्र विनिगमकाभाव इति भावः। **पुरस्तादपवादेति।** पुरस्तात्पठिता अपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानितिन्यायः।

मूलपृष्ठम् २६६—**अतएवानुमितित्वस्य लक्षणत्वेत्यादि।** गिरिरग्निमानित्यादिव्यक्तिविशेषवृत्त्यनुभवत्वन्यूनवृत्तिजातित्वेन लक्षणत्वम्, स्वरूपेण त्वनुमितित्वस्य लक्ष्यतावच्छेदकत्वम्।

मूलपृष्ठम् २६८—**लघूच्चारणयत्वमिति।** व्योर्लघुप्रयत्नतरः शाकटायनस्येति सूत्रप्राप्तमिदम्। **क्त्वान्तस्यापीति।** जीविकां कृत्वेत्येतावत्क्त्वान्तस्यापीत्यर्थः प्रकृतत्वलाभः। तेन केवलस्य कृत्वेत्यस्य परिनिष्ठितत्वेऽपि न क्षतिः। **समभिव्याहृतस्यापीति।** एतेनालक्ष्यत्वलाभः।

मूलपृष्ठम् २६९—**सहितयोस्तयोरिति।** अतिप्रसङ्गनिवारकत्वमित्यनुषज्यते। **अश्वस्त्वमिति।** टुओश्वि गतिवृद्ध्योरित्यस्य लुङि "श्वयतेरः" इतीकारस्याकारे सति रूपम्। **अजापयः शत्रूनिति।** क्रीङ्जीनां णावित्यनेनैव आत्वे सति जयतेर्णिजन्तस्य लुङि मध्यमपुरुषस्य रूपम्। **साधुत्वाघटितताया दुर्वचतयेति।** साधुत्वज्ञापनमेव विधिप्रवृत्तिरत्र।

साक्षाल्लक्ष्यसंस्कारकेति । संज्ञादिसूत्रेऽतिव्याप्तिवारणाय साक्षादिति । यद्यपि लक्ष्यसंस्कारोऽपि साधुत्वप्रकारकबोध एव, तथापि सुध्युपास्य इति साधुपदमित्येवं वस्तुगत्या परिनिष्ठितपदविशेष्यकसाधुत्वप्रकारकबोधः फलम्, तज्जनकस्त्वचि परे इकः स्थाने यण् साधुरिति साधुत्वप्रकारकबोध इति भेदः ।

मूलपृष्ठम् ४००—प्रवृत्तत्वादिति । रेफस्य विसर्गः पुनरधिकः कृत इत्यन्यत् । निर्णीतत्वादिति । तत्र पदसंस्कारपक्षेऽनादरः, "हरिः ॐ" इति तु सम्प्रदायमात्रसिद्धमिति भावः । अप्रवृत्तनित्येत्यादि । घटादौ तु न परिनिष्ठितत्वव्यवहारः प्रसज्यते, शब्दत्वे सतीत्यस्यापि विवक्षणीयत्वादिति भावः । स्वस्वप्रकृतीति । प्रकृत्यर्थे एव विहितस्य तलादिप्रत्ययस्य सङ्ग्रहाय स्वप्रकृतीति । परस्पराश्रय इति । तथाचोक्तलक्षणस्य निष्प्रयोजनत्वम्, केवला प्रकृतिर्न प्रयोक्तव्या न वा केवलः प्रत्ययः, किन्तु परिनिष्ठितपदमिति तादृशलक्षणव्यावर्त्यतावच्छेदकप्रकृतित्वप्रत्ययत्वयोरज्ञाने केवलप्रकृतिप्रत्ययव्यावृत्तत्वग्रहस्य परिनिष्ठितपदेऽसम्भाव्यत्वात्, भेदग्रहे प्रतियोगितानुयोगितावच्छेदकग्रहस्य कारणतादर्शनादिति भावः । नित्यसाकाङ्क्षं यद्रूपमिति । प्रत्ययः परश्चेत्यनुशासनेन पूर्वावधिसाकाङ्क्षं प्रत्ययत्वं वा तत्तत्प्रत्ययगतविशेषरूपं वा । ईषदूनः पटुः=बहुपटुरितीषदसमाप्तौ "विभाषा सुपोबहुच् पुरस्तात्तु" इतिविहितस्य बहुचस्तु प्रत्ययत्वेऽपि पूर्वत्वं न तु परत्वमिति यद्यपि, तथापि तस्याप्युत्तरावधिसाकाङ्क्षत्वम् । न च'मिदचोऽन्त्यात्पर' इत्यस्योपस्थितिस्थानेन'नपुंसकस्य झलच' इत्यादिना विहितनुमागमस्यावधिसाकाङ्क्षता नियमेनास्तीति तस्यापि प्रत्ययत्वप्रसङ्गः; तस्य तृतीयचतुर्थपञ्चमाध्यायैरविहितत्वात् । हठादुत्थाप्याकाङ्क्षा त्ववधौ टिदाद्यागमे आदेशेऽपि च सम्भवतीति नित्यत्वमप्याकाङ्क्षायां विवक्षाक्षमम् ।

मूलपृष्ठम् ४०१—शब्दतदुपजीविप्रमाणातिरिक्तेत्यादि । 'प्रत्यक्षेणानुमानेन योऽर्थो नैवावगम्यते । तं वै विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥" इति लक्षणमपीत्थमेव परिष्कर्तुमुचितम्, यथाश्रुते स्मृत्यादावतिप्रसङ्गस्य स्पष्टत्वात् । इति शब्दखण्डनशारदायां राजहंसः ।

## अर्थापत्तिखण्डनशारदायां राजहंसः ।

मूलपृष्ठम् ४०४—वक्ष्यमाणा एवेति । असाधारणाक्षेपाभिप्रायेणैवकारः, उपजीव्यनिरासस्तु सर्वसाधारणः प्राक्कृत एव । सिद्धत्वप्रकारकज्ञानस्येति । अतिवेलं शैथिल्यमिह पूर्वपक्षस्यैवेति तु स्पष्टत्वान्नोच्यते । तत्त्वेन=असिद्धत्वेन ।

मूलपृष्ठम् ४०५—तादृशमतेः=अनुपपत्तिमतिप्रसूतमतेः । अनुमितिकारणतायाइति । स्वीकार्यत्वादित्युपरितनेनान्वयः ।

मू० पृ० ४०८—तयोः=उक्ताधिकरणयोः । तत्र तत्तयेति । तदवृत्तिधर्मवत्त्वमित्यत्र तत्पदार्थतया ।

मूलपृष्ठम् ४०६—देशाविषयकत्वे सति देशसामान्यविषयकत्वमिति। देशसामान्यविषयकत्वं न यावद्देशविषयकत्वम्, येनात्राप्यसम्भवः स्यात्, अपि तु सामान्यरूपेण देशविषयकत्वमिति भावः।

मूलपृष्ठम् ४१०—स एव चेति। भावाभावयोरविरोध एव चेत्यर्थः।

## इत्यर्थापत्तिखण्डनशारदायां राजहंसः।

## अनुपलब्धिखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ४१२—स्वतः सिद्धसाक्षिस्वीकारेणेति। उपलम्भस्य साक्षिग्राह्यतया तदभावस्यापि तथात्वसम्भव इति दर्शनसर्वस्वे स्वातन्त्र्यवादे उपपादितम्, घटादेस्तु मानसप्रत्यक्षस्थानीयेन साक्षिणाऽवेद्यतया तदभावस्यापि न तेन वेद्यता, अपि तु षष्ठप्रमाणेनेत्याशयः। अद्वैतसिद्ध्यादौ तु ज्ञानाभावस्यापि न साक्षिवेद्यत्वमित्यज्ञानस्य भावरूपत्वप्रकरणे निरणायि। वदन्तीति। प्राङ् नास्तितामतिस्थलेऽनुमानस्यानुभवारोहित्वोपपत्तावपीन्द्रियसन्निकृष्टाधिकरणकस्थले तस्य तथात्वे विवादसम्भवमभिप्रेत्य वदन्तीत्युक्तम्। नवा तदभावो न योग्य इति। तदभावः=रजतत्वप्रमाऽभावः।

मूलपृष्ठम् ४१२—तदुपलम्भकसमवधानरूपतयेति। स्तम्भे पिशाचभेदप्रत्ययार्थं त्वधिकरणोपलम्भकसमवधानमेवादर्तव्यम्, अत एव तत्राधिकरणीयत्वप्रसञ्जितप्रतियोगिकत्वमनुपलम्भे नवीना योग्यतामाहुः। एतच्चैतत्प्रकरणान्ते स्वयं वक्ष्यति। आरोपस्याभावबुद्ध्यहेतुत्वेन त्वत्रापि प्रसञ्जितत्वं प्रसञ्जनयोग्यत्वं वक्तव्यम्। नियमोपगमादिति। तथाच विनश्यदवस्थदोषान्न भ्रमसम्भवः। दण्डादेरपि क्षणमेकमपि कार्यसहवर्तित्वमन्ततो मन्तव्यं न तु यावत्कार्यभावित्वम्, प्रत्यक्षादिबाधात्, अतएव समवायिकारणदृष्टान्तेन कार्यचरमक्षणपर्यन्तं कारणमात्रस्य सत्त्वं न शक्यं कल्पयितुम्, विनश्यदवस्थदोषात्तु भ्रमानुपगमे न किञ्चिद्बाधकमिति भावः।

इष्टापादनादिति। प्रागभावमादाय तु चर्चा नात्रादृता, तस्य नव्यैरनुपगमात्, सोऽपि च स्वकार्यात्मकप्रतियोगिकाले स्थूलरूपेण प्रतियोग्यात्मकेन वर्तत एव, उपगम्यमानोऽपि हि स साङ्ख्यवत्सूक्ष्मावस्थात्मैवोपगन्तव्यः। ननु विनाशस्य तिरोभावमात्रत्वपक्षेऽपि विनश्यदवस्थप्रागभावस्य प्रतियोगिनं प्रति विनश्यदवस्थप्रतियोगिनश्च ध्वंसं प्रति जनकत्वमागतमेवेति विनश्यदवस्थदोषस्यापि भ्रमजनकत्वमस्तु, सूक्ष्मरूपेणावस्थानं हि साङ्ख्यनये न दोषस्यापि न सम्भवति। मैवम्, प्रागभावप्रतियोगिध्वंसानामवस्थाविशेषाणां कार्यकारणभावाभिधानस्याभ्युपेत्यवादत्वात्, वस्तुतस्तु पूर्वावस्था नोत्तरावस्थाकारणम्, मानाभावात्, अनुभवविरोधाच्च, अतएव चरकादौ रोगपूर्वरूपाणां निदानपार्थक्येन परिगणनमादृतम्। न खलु नियताव्यवहितपूर्वापरीभावमात्रेण कार्यकारणभावव्यवहारः, अन्यथासिद्धेऽतिप्रसङ्गात्, अन्यथासिद्धत्वस्य च प्रामाणिकव्यवहारमात्रशरणत्वात्, कथमन्यथा गुरुरूपेण व्यापकरूपेण च कारणतायामन्यथासिद्धत्वोपगमः सङ्गच्छेत। दोषस्य तु निमित्ततया न भ्रमपूर्वावस्थारूपत्व-

मिति वैषम्यम्। तस्माद्यादृशेन रूपेण दोषस्य कारणत्वं तादृशेनैव रूपेण कार्यसहवर्तित्वमुचितम्। तदभावोपदर्शनायेति। तदा शङ्खे पीतत्वस्मृतिपरामर्शः।

मूलपृष्ठम् ४१४—अन्यथा वेति। सप्रतियोगिकत्वेन वेत्यर्थः। सम्बन्धत्वं तु विशिष्टधीजनकत्वमिति भेदः। प्रमात्वन्यूनवृत्तीति। न्यूनवृत्तित्वं = व्याप्यत्वं साक्षात्कारित्वेऽन्वेति, सामानाधिकरण्यमात्रोपादाने विषयान्तरे प्रमात्ववतः प्रतियोग्यंशे भ्रमात्मकसाक्षात्कारस्य ग्रहणेन दोषस्यापि साकल्यान्तःपातित्वापत्तौ तत्सत्त्वे भ्रम एव भवेत्प्रतियोगिनो न तु तदभावबोधः। एतेन तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिह न्यूनवृत्तित्वमपि न शङ्कनीयम्। असमूहालम्बनमादाय विषयान्तरे प्रमात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकताया अपि प्रतियोगिविषयकभ्रमात्मकसाक्षात्कारित्वे सत्त्वेनोक्तदोषतादवस्थ्यात्।

मूलपृष्ठम् ४१५—विवक्षितेति सन्निकर्षान्वयि। उभयत्र = अन्यत्वेऽसमवधाने च।

मूलपृष्ठम् ४१६—लौकिकप्रत्यक्षेत्यर्थ इति। प्रस्तुतयोग्यताया उदयनाचार्यादिताकिकैरपि स्वीकृततयाऽऽपत्तेस्तत्साधारण्यमनुरुध्य लौकिकप्रत्यक्षेत्युक्तम्, भट्टमते लौकिकप्रत्यक्षस्थानीयाया अपि प्रमाया लौकिकप्रत्यक्षपदव्यपदेशसम्भवात्, भूतलं घटाभाववदित्यादाविन्द्रियसन्निकृष्टविशेष्यकस्थले ऐन्द्रियकत्वव्यवहारस्य सर्वसम्मतत्वात्, उपलक्षणं वा लौकिकप्रत्यक्षपदं लौकिकप्रत्यक्षस्थानीयाया षष्ठप्रमाया अपि।

मूलपृष्ठम् ४१७—एवञ्चाश्रयसन्निकर्षोऽपि तादृशकारणान्तर्गत इति। प्राङ्नास्तिताग्रहे तु प्रकारान्तरेणापि मूलेऽनुपपत्तिर्वक्ष्यत एवेति तदनुपग्रहो न दोषः। अन्यादृश्येव च तत्र योग्यतेत्यग्रे शारदायां व्यञ्जितम्।

मूलपृष्ठम् ४१८—अन्यथाऽनवस्थाया अपीति। अन्यथेति। अनुपलम्भस्य ज्ञातस्याभावप्रमाविशेषहेतुत्वे तज्ज्ञानस्यापि चोपलम्भात्मकप्रतियोग्यनुपलम्भेन ज्ञातेनैवोपार्जनीयत्वे चेत्यर्थः। अपिना मूलोक्तदोषसमुच्चयः। स्वतःसिद्धसाक्षिणा ज्ञातस्य योग्यानुपलम्भस्य लिङ्गतासम्भवेनानुमानिक्येवाभावधीरिति प्रागुक्तनयमनुसृत्य त्वाह षष्ठप्रमाणासिद्धयापत्तेश्चेति। शिवभागवतादिवदिति। शिवस्य भगवत इदमिति युगपत्समासतद्धितौ, अन्यथा समस्तात्तद्धितोत्पत्तौ शैवभगवतमिति कथञ्चिदुभयपदवृद्धौ तु शैवभागवतमिति स्यात्। यदि च तत्र भागवतशब्दस्योत्कर्षप्रतिपादकग्रन्थविशेषे लाक्षणिकत्वम्, एवञ्च शिवस्य भागवतमिति तद्धितानन्तरमेव समासः, उत्कर्षे च शिवपदार्थान्वयः, एवं कृतारिषड्वर्गजयेनेत्यादावप्यरीणां षण्णां वर्ग इति न युगपत् समासः, अपि तु षड्वर्गशब्दः षट्त्वसङ्ख्यावच्छिन्नसमुदायिघटितसमुदायपर इति तदैकदेशे षट्त्वेऽरिपदार्थान्वय आधेयतासम्बन्धेनेत्यनुमन्यते, तदा प्रकृते मूले काल एव कालिक इति स्वार्थे तद्धितः, फलविषयकालिकेऽभाव इति सप्तमीसमासाच्च तद्धितार्थस्य वृत्तित्वस्य लाभ इति न काचिदनुपपत्तिः।

मूलपृष्ठम् ४१९—आद्येऽसम्भव इति। उपलक्षितत्वस्य स्वरूपमात्रत्वकल्पेऽनुपदमुक्तोऽसम्भवप्रकारः। मया प्रातःकालीनतयेति। मयेत्यनेन निर्वर्णितयोग्यताघटकतादृशानु-

भवजन्यतत्स्मृतिमत्तेत्यर्थकेन स्मृतिविरहरूपानुपलम्भे निरुक्तयोग्यतालाभेनोपेक्षणीयविषयवत्त्वेनास्मर्यमाणत्वेऽपि तादृशविषयाभावस्यासद्भावमादाय व्यभिचारो नोद्भावनीयः। यदि मयोपेक्षणीयमनुभूतं स्यात्तदा वस्त्वन्तरवत्स्मर्येतेति हि नानुभव इति नोपेक्षणीयान्तर्भावेन तादृशस्मृतिकालीनत्वस्य योग्यतारूपत्वम्। वस्तुतो व्यभिचारिणाऽपि च लिङ्गेन व्यभिचाराप्रतिसन्धानदशायां साध्यवति धर्मिणि यथार्थानुमितिरुत्पाद्यत एव। सामान्यव्याप्तावनुपेक्षणीयविषयवत्त्वेनास्मर्यमाणत्वं वा हेतुरस्तु येन व्यभिचारशङ्कापि नोन्मिषेत्। चैवमुपेक्षणीयस्य प्राङ्नास्तितामतिर्नानुमानिकी स्यात्, तथाच तत्रैव षष्ठप्रमाणप्रसर इत्यापाततोऽपि शङ्कनीयम्, तत्र योग्यताया दुर्निरूपत्वे षष्ठप्रमाणप्रसरस्याप्यसम्भाव्यत्वात्।

इत्यनुपलब्धिखण्डनशारदायां राजहंसः।

## हेत्वाभासखण्डनशारदायां राजहंसः।

मूलपृष्ठम् ४२०—शारदायामग्रे दर्शनीयदिशाऽसिद्धे हेत्वाभासान्तरस्थलेऽपि सर्वत्र सत्त्वेन मुख्यतयोत्कटजिज्ञासाविषयीभूतत्वेन तन्निरासस्य प्राथम्यसमर्थनसम्भवेऽपि पूर्वग्रन्थेन सङ्गतिप्रदर्शनस्यैव प्रधानतां नयन्नाह विशेषाभावोऽसिद्ध इति पूर्वोक्तवाक्यघटकेत्यादि। समानसमाधानं चेति। विशेषखण्डनास्फूर्तिदशायां कथायां विशिष्य सामान्यखण्डनज्ञानसाफल्यमिति भावः।

मूलपृष्ठम् ४२१—लक्षणसमन्वयेऽपीति। आश्रयासिद्धिग्रहप्रतिबध्यस्य निर्वह्निः पर्वत इत्येतावन्मात्रविषयकानाहार्यग्रहस्य प्रसिद्धत्वादिति भावः। तद्ग्रहस्य = पूर्वप्रदर्शितबाधादिग्रहस्य। निर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतयेति। निरुक्तविषयिताऽन्यतमत्वघटितनिवेशात्पूर्वं यथाश्रुत एवेदम्। अभावप्रयोजकेति विषयितान्वयि। बाधादिभ्रममादाय सद्धेतौ दुष्टत्वव्यवहारवारणाय भ्रमान्यवृत्तीति।

मूलपृष्ठम् ४२२—अत्र वदन्ति कल्पमिति। अयं कल्पो यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितित्वव्यापकमित्यादिना प्रागनूदितः। स्वप्नादौ बाधग्रहदशायामिति। न च तत्र बाधादिरूपविशिष्टाप्रसिद्धिः, अनिर्वाच्यख्यातेः साधनात्, ज्ञानानां स्वविषयशूरत्वात्, भ्रमत्वं तु कल्पितविषयकत्वेन न तु तदभाववति तत्प्रकारकत्वेन। यदि च व्यावहारिकमेव बाधादिरूपं विशिष्टं विवक्ष्यते तदाप्यह अत्यल्पं चेदमुक्तमिति। शपथैकप्रमाणकमेवेति। न चानुमित्यात्मकं वा ज्ञानान्तरं वा प्रकृतपक्षादौ प्रकृतसाध्यादिगोचरं बाधादिज्ञानानन्तरं दोषजन्यमेव स्यात्, निविष्टं च दोषाजन्यत्वं ज्ञान इति वाच्यम्, यतो भ्रमत्वार्थं तत्र दोषापेक्षा, न तु दोषाभावविशिष्टस्य प्रतिबन्धकतां स्वीकृत्योत्तेजकविधयेति तादृशाभिप्रायकं विरोधिविषयिताप्रयुक्तत्वघटितं लक्षणमसम्भवपराहतमेव, नाहं गौर इति बाधनिश्चये सत्यपि दोषविशेषमहिम्नाऽहं गौर इति ज्ञानोत्पत्त्या 'अहं गौर आत्मत्वा' दित्यादिस्थलीयबाधादावव्याप्तिरिति दोषाजन्यत्वनिवेश इति हि भवतामभिधानम्। तादृशाभिप्रायाभावे च विरोधिविषयिताप्रयुक्तत्वोक्तिरपि न रमणीया। यदि च स्वसिद्धान्तं परित्यज्यानुत्पादप्रयोजक-

ज्ञानीया विषयिता न विरोधिविषयिता, अपि त्वप्रामाण्यज्ञानमात्रजनकज्ञानीयैवेत्युच्येत, तदा तादृशज्ञानीयविषयिताप्रयुक्तत्वं न पक्षे साध्यवत्तावगाहित्वसाध्यव्याप्यहेतुमत्तावगाहित्वोभयाभावे, अपि तु तादृशावगाहिताद्वयवद्बोधीयाप्रामाण्यभाने इति कथं नासम्भव इति भावः। व्यावहारिकयादृशविशिष्टविषयकनिश्चयेन तादृशावगाहिताद्वयशालिबोधेऽप्रामाण्यज्ञानं जन्यते तादृशविशिष्टस्य दोषत्वमिति तु सर्वथैव लक्षणान्तरं स्यात्, तत्साधारणान्यपि तु दूषणान्यग्रे बहून्यभिहितानीति सर्वं चतुरस्रम्।

दोषासङ्ग्रहेऽपीति। पर्वतत्वाद्यवच्छेदेन वह्न्यादिमत्त्वस्याप्रसिद्धत्वेन पर्वतत्वादिसामानाधिकरण्येन च वह्न्यादिमत्त्वस्य प्रसिद्धत्वेऽपि प्रतिबन्धकतावच्छेदकविषयतानाश्रयत्वेनाश्रयासिद्धित्वानुपपत्तेः। एवं बाधेऽपि द्रष्टव्यम्, पर्वतत्वाद्यवच्छेदेन हि वह्न्यभावादिमत्त्वमप्रसिद्धम्, पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वं च न निर्वह्निः पर्वतो वह्निमानित्याहार्यज्ञानविषयितायास्तद्व्यापकीभूतविषयिताया वा विरहप्रयोजकविषयितानिरूपकतावच्छेदकम्, येन व्यापकाभावप्रयोजकस्य व्याप्याभावप्रयोजकत्वन्यायावतारोऽपि स्यात्। निर्वह्निमान् पर्वत इति। वह्नेरभावो निर्वह्नि निर्मक्षिकमितिवत्, तद्वानित्यर्थः, वह्निमत्समुदायान्निष्क्रान्त इति वा। निर्वह्निः पर्वत इत्येव वा पाठो द्रष्टव्यः।

मूलपृष्ठम् ४२३–भवतु पारिभाषिक इति। साधारण्यादित्रयस्य व्यभिचारप्रभेदस्य स्वरूपासिद्ध्यादेश्चासिद्धिप्रभेदस्य प्रत्येकं दूषकत्वे कथञ्चिद्व्यभिचारत्वेनासिद्धित्वेन चैकीकृत्य परिगणनं पारिभाषिकमेव, विरोधस्य व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारेण साम्येऽपि पार्थक्येन परिगणनं बाधसत्प्रतिपक्षयोश्चानुमितिप्रतिबन्धकज्ञानविषयतयैकीकृत्य परिगणनसम्भवेऽपि पार्थक्येन परिगणनं रुचिमात्रमूलकमिति भावः। असकृदावेदितत्वादिति। सप्रतियोगिकत्वेनाननुभवात्, विशिष्टबुद्धिविरहाच्च, विषयतायां तद्घटिते च सविषयकान्यं प्रति सम्बन्धत्वानुपपत्तेश्चेति भावः।

मूलपृष्ठम् ४२५–सत्प्रतिपक्षविषयित्वाव्यापकेति। न च–मेयत्वविशिष्टसत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यज्ञानीयविशिष्टसत्प्रतिपक्षविषयिताभेदस्य मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयितायामभावेन दोषतादवस्थ्यमिति सत्प्रतिपक्षविषयित्वाव्यापकेत्यत्र सत्प्रतिपक्षे विशिष्टान्तराघटितत्वोक्तौ सत्प्रतिपक्षविषयितायां वा सत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यत्वोक्तौ पुनरप्युक्तरीत्या दोषतादवस्थ्यमित्यनवस्था, तत्र शृङ्गग्राहिकया शुद्धसत्प्रतिपक्षविषयितोपादाने तु महाननुगमः, विशिष्टान्तरविषयितायामेव चैवं शृङ्गग्राहिकयोपात्तशुद्धसत्प्रतिपक्षविषयिताभेदनिवेशौचित्यमिति—चोदनीयम्, सत्प्रतिपक्षविषयित्वाव्यापकविषयिता नास्तीति प्रतीतिसाक्षिकसामान्याभावस्य विवक्षितत्वात्, तस्य च शुद्धसत्प्रतिपक्षज्ञाने एव सम्भवात्, तादृशज्ञाने विशिष्टसत्प्रतिपक्षविषयित्वाव्यापकविषयिताविरहस्यापि सद्भावात्, विशिष्टसत्प्रतिपक्षज्ञाने तु विशिष्टसत्प्रतिपक्षविषयित्वाव्यापकविषयिताराहित्यसम्भवेऽपि शुद्धसत्प्रतिपक्षविषयित्वाव्यापकमेयत्वविषयिताराहित्याभावेन न तादृशसामान्याभावसम्भव इत्यदोषः। स्मृत्यन्यत्वखण्डनशारदोक्तरीत्या सामान्याभावखण्डनेन पुनरत्रापि प्रत्यवस्थानसम्भव इत्यन्यत्।

यदि च कश्चिद्विशिष्टशुद्धयोरैक्यपक्षे विषयभेदाभावेन मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयितायाः शुद्धसत्प्रतिपक्षज्ञानीयसत्प्रतिपक्षविषयितायाश्च भेदं न सहेत, तदाप्याह अत्र मनः प्रत्ययाभावे इति। मनः प्रत्ययः = श्रद्धा। यद्यपि विषयभेदेन विषयिता भिद्यते न तु ज्ञानभेदेन, तथापि विषयतावच्छेदकवैचित्र्येण विषयिताभेदस्यानपह्नवनीयत्वमित्याशयेन तुकारः। जनकताविशिष्टैवेति। न चाधिकरणनिरूपितवदित्यंशीयविषयितानामनुमितिजनकतानवच्छेदकत्वम्, जलव्यापको वह्न्यभावः जलवान् ह्रद इति ज्ञानमात्रेण वह्न्यभावानुमितिसम्भवादिति वाच्यम्, स्वव्यापकसाध्यसामानाधिकरण्यस्य व्याप्तित्वेन तद्विषयिताया अनुमितिजनकतावच्छेदकत्वध्रौव्येण तद्घटकविषयितानामपि तथात्वात्। यदि तु वह्निव्याप्यो धूमः, धूमवान् पर्वत इत्यस्यैव धूमव्यापको वह्निः धूमवान् पर्वत इत्यस्यापि ज्ञानस्य प्राभाकररीत्योपपन्नानुमितिकारणताकत्वेन शिष्टांशस्यानुपयुक्तत्वम्, न खलु व्यापकतागर्भे हेत्वधिकरणनिरूपितवृत्तिताक्त्वस्याभावे प्रविष्टतामात्रेण साध्याधिकरणनिरूपितवदित्यंशस्यापि तद्गततयाऽनुमितिजनकतावच्छेदकविषयितानिरूपकत्वमायाति, एवं हि वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे वृत्तित्वविषयितायाः प्रतिबन्धकतानवच्छेदकत्वोक्ति र्म्लानिमानीता स्यात्, वह्न्यभाववदंशेऽपि वृत्तित्वस्य प्रविष्टत्वादिति युक्तं मन्यते, तदा प्रस्तुतरीत्याऽव्याप्तिः पृष्ठारूढैव।

मूलपृष्ठम् ४२६-परस्परस्वावच्छिन्नेति। न चैकनिश्चयविषयतावच्छेदकरूपावच्छिन्नविषयताशून्यज्ञानीयत्वस्यापरनिश्चयविषयतायां निवेशमात्रेण प्रकृतासम्भववारणेन परस्परत्वोक्तिरकिञ्चित्करीतिवाच्यम्, अभाववान् ह्रदः, वह्न्यभाववान् ह्रद इति निश्चयविषयविशिष्टद्वयमादायासम्भवतादवस्थ्यात्, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशून्यज्ञानीयत्वस्य 'अभाववान् ह्रद' इति निश्चयविषयतायां सत्त्वात्।

परम्परीयनिश्चयनिष्ठावच्छेदकतेति। इयं द्वितीयनिश्चियपदोपादेयनिश्चयनिष्ठा। विशिष्टिविषयितारूप इति। अत्र विषयिता जलवद्ध्रदत्वावच्छिन्ना विशिष्टद्वयविषयकज्ञानीया। स्वविशिष्टरूपेति। प्रथमसम्बन्धे स्वविशिष्टरूपं जलवद्ध्रदत्वम्, द्वितीये तु वह्न्यभाववज्जलवत्त्वम्। सामानाधिकरण्योभयेति। वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकनिश्चयस्यैकत्वेन वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितासामानाधिकरण्यं जलवद्ध्रदत्वावच्छिन्नविषयितायामक्षतम्। परन्त्वेवमित्यादि। अतिव्याप्तिरिति। साध्याभाववत्तद्रूपत्वाभावादलक्ष्यता, अभाववान् गगनाभाववान्, अभाववांश्च गगनाभाववदभाववत्कालीनघट इति विशिष्टद्वयम्, तत्र द्वितीयस्य प्रथमघटिततया प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वम्, एवं नीलं नीलरूपाभाववत्, नीलं च रूपमिति विशिष्टद्वये प्रथमस्य द्वितीयघटिततया प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वम्। प्रतिबन्धकतातिरिक्तवृत्तित्वाभावादिति। इदं प्रागुक्तरीत्या प्रसक्तासम्भववारणाय विशिष्टद्वयविषयितायां प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वनिवेशात्मकप्रथमकल्पे। द्वितीयकल्पानुसारेण त्वाह

परस्परेत्यादि । ज्ञानीयत्वाभावाच्चेति । तथा च द्रव्यत्ववान् गगनाभाववान् द्रव्यत्ववांश्च तादृशघट इत्याद्युदासीनविशिष्टद्वयविषयिताशून्यत्वमादायातिव्याप्तिरिति भावः ।

मूलपृष्ठम् ४२७—न च यद्रूपावच्छिन्नेति । यद्रूपं=लक्ष्यतावच्छेदकम् । केनचित्प्रकारान्तरेणेति । एतत्सामान्यनिरुक्तिगूढार्थतत्त्वालोके विलोक्यम् , निष्प्रयोजनगौरवभीरुतया त्विह नोपन्यस्तम् । असाधारण्य इति । साध्यव्यापकीभूताभावप्रतियोगित्वरूपे इत्यर्थः । एतद्ग्रहस्य हेतुमत्पक्षग्रहकालीनस्यैवानुमितिप्रतिबन्धकतेत्याशयेनाह हेतुमत्पक्षप्रवेशेनेति ।

एतेनानुमित्यप्रतिबन्धकत्वघटितेत्यादि । अप्रयोज्यान्तं प्रयोज्यान्तं चाधिकरणतायामन्वेति । अधिकरणभेदेनाधिकरणताभेदाद्बाधज्ञानोत्तरज्ञाननिष्ठतादृशाधिकरणता बाधविषयितयैव प्रयुक्ता, न तु सत्प्रतिपक्षविषयितयाऽन्याकारबाधविषयितया वेति व्यक्तमन्यत्र ।

मूलपृष्ठम् ४२८—विशिष्टान्तरविषयितात्वव्यापकेति । इदं विशेष्यतात्वेऽन्वेति । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेति । एतावद् विशिष्टान्तरेत्यत्रान्तरपदलभ्यम्, यद्रूपावच्छिन्ने लक्षणं सङ्गमनीयं तद्रूपं स्वम् । तादृशावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकता विशिष्टान्तरीयधर्मे । यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वमित्यत्र विशिष्टान्तरीयधर्मावच्छिन्नविषयतावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वं मनसि निधायाह विषयतानिष्ठावच्छेदकतेत्यादि ।

तथाप्यसम्भवादिति । लक्ष्यतावच्छेदकरूपावच्छिन्नविषयिताया अव्यापकीभूतत्वसम्भवत्या तच्छून्यत्वस्य दोषनिश्चयेऽभावादिति भावः । किञ्चिद्रूपनिष्ठेत्यादि । तद्व्यक्तेः स्वरूपतो भानमते न्यूनवारकपर्याप्तिः फलवती, तज्ज्ञानवृत्तित्वविशिष्टविषयत्वादिकं तद्व्यक्तित्वेनोपादाय तदभावग्रहणस्य वारणं हि तस्याः फलम् , तत्रापि तद्व्यक्तित्वस्य भाने त्वितरवारकपर्याप्त्यैव तादृशाभाववारणसम्भवः ।

ज्ञानावारणादिति । ननूक्तस्थले जातित्वावच्छिन्नविषयित्वस्याव्यापकत्वाभावेऽपि जातिमज्जातिमत्त्वावच्छिन्नविषयित्वस्य जातिमान् ह्रद इति ग्रहावृत्तितयाऽव्यापकत्वात्तच्छून्यत्वाभावेन जातिमान् जातिमानितिज्ञानं वार्यतामत आह जातिमज्जातिमत्त्वस्येति । तत्क्षणवृत्तित्वविशिष्टेति समुदायत्वान्वयि ।

मूलपृष्ठम् ४२९-सत्तयाप्यसम्भव इति । वह्न्यभाववान् जातिमानिति ज्ञानस्य ह्रदो वह्निमानिति प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तिविषयिताकत्वात् । अव्यापकीभूतविषयिताशून्यत्वं हि यथा वह्न्यभाववान् ह्रद इत्यत्र, तथोक्तज्ञानेऽपि सम्पन्नमिति भावः । समानोऽयं चर्च इति । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इति विहिताङ्प्रत्ययान्तस्य यद्यपि स्त्रीत्वम्, अतएव दर्शनसर्वस्वे 'परिणामवादस्तु बालानामेवालाप इति किं तच्चर्चया' इति स्वयं प्रयुक्तम् , तथापि योगभाष्ये ( २-पा-सू-२३। ४ पा-सू-८ ) इति स्थलद्वयप्रयुक्तस्य पुंलिङ्ग-

चर्चशब्दस्यानुकरणमिहेदं घञि समर्थनीयम्, 'स्त्रियां क्तिन्'इत्यादिविहितप्रत्ययानां हि स्त्रीत्वविशिष्टे भावे विधानम्, पुंस्त्वविशिष्टे तु घञ् भवत्येव, कारः कृतिरित्युभयविधप्रयोगदर्शनादिति। असम्भवः प्रसञ्जनीय इति। नन्वभावत्वेन ह्रदत्वावगाहिनो वह्न्यभाववान् अभाववानिति ज्ञानस्य विषयीभूतं विशिष्टं यद्यप्यपोहवादिसौगतमते प्रसिद्धम्; तथापि मतान्तरे तदप्रसिद्ध्या कथमसम्भवः, तस्य यद्रूपविशिष्टविषयकनिश्चयत्वमित्यत्र यद्रूपपदेनोपादानासम्भवेन तादृशनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वसम्पादनस्य दूरापेतत्वात्, न च तथाप्यनिर्वाच्यख्यातिमते भ्रमविषयीभूतं विशिष्टं प्रसिद्ध्यत्येवेति तदवस्थो दोष इति वाच्यम्, एवं हि तादृशनिश्चये सर्वांशे प्रमात्वस्य व्यावहारिकयद्रूपविशिष्टविषयकत्वस्य वा विवक्षणसम्भवादित्यत आह सर्वांशे प्रमात्वादीति। आदिना व्यावहारिकत्वं विषयगतं ग्राह्यम्। पूर्वोदितमिति। प्रमात्वादिनिरासेन व्यावहारिकत्वमपि व्यवहारकालाबाध्यात्वरूपं निरस्तमेव विपरीतप्रमैव हि बाध इति भावः अन्यतमत्वघटितकल्पवदिति। प्रस्तुतसामान्यनिरुक्तिनिराकृत्युपक्रमेऽवगन्तव्यम्। तद्रूपपदेनैकदोषगतमेव रूपं विवक्षणीयम्, अननुगमपक्षाश्रयणाल्लक्ष्यस्यापि सङ्कोचेन च नाव्याप्तिरित्यत आह एकधर्मावच्छिन्नेति। निवेशनिबन्धनाश्चेति। विषयांशेऽव्याप्यवृत्तित्वग्रहे बाधग्रहस्याप्रतिबन्धकत्वादव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशः।

संसर्गस्यापि संसर्गेणेति। प्रतियोगित्वानुयोगित्वात्मकेनेत्यर्थः। प्रतियोगित्वविषयतानिरूपितविषयतेति। घटवद्भूतलमित्यत्र घटनिष्ठप्रतियोगिताकः संयोग इति संयोगप्रतियोगित्वघटेति त्रयनिष्ठविषयतानां निरूप्यनिरूपकभावः। ध्रुवमेवेति। घटवद्भूतलमित्यत्र यदि प्रतियोगित्वं न भाति तर्हि किन्निष्ठविषयतानिरूपितविषयताभावाय घटे प्रकारताव्यवहार इति भावः। हेत्वाभाससमाभासेति। हेत्वाभासनिष्ठसद्दूषणेत्यर्थः। हेत्वाभासदृढावद्येत्येव वा पठनीयम्। कृते कृत इति। सामान्यनिरुक्तिदूषणानां हेत्वाभासविशेषलक्षणसाधारणत्वादिति भावः।

मूलपृष्ठम् ४३०—नन्वसिद्धिसत्त्वे तावन्न सद्धेतुत्वम्, भवति च सद्धेतोरपि सत्प्रतिपक्षितत्वमिति कथमुच्यते हेत्वाभासान्तराणामसिद्धिव्याप्यत्वमित्यतः आह विरोधिपरामर्शदशायामिति। पक्षाभावादिति। तथाच वस्तुगत्या दोषवत्त्वमसिद्धिव्याप्यं विवक्षितमिति भावः। न प्रामाणिकीति। अत्राधिकं भेदसंसर्गाभावयोर्भेदखण्डनशारदाया राजहंसे निरूपितम्।

मूलपृष्ठम्४३१—प्रमितिविरहं प्रति विषयविरहस्य प्रयोजकत्वादितिपूर्वोक्तहेतुं प्रत्याह प्रयोजकत्वं त्वप्रयोजकमेवेति। व्यभिचारधीजननद्वारेति। हेतौ व्यापकव्यभिचारेण हेतुना व्याप्यव्यभिचारस्योन्नेयत्वात्, साध्योपाध्योश्च व्याप्यव्यापकभावादिति भावः। सिद्धसाधनवदिति। सन्देहादिरूपपक्षताविघटनद्वारा सिद्धसाधनस्य पक्षे साध्यवत्त्वनिश्चयात्मकस्य दूषणत्वम्।

मूलपृष्ठम् ४३२—निग्रहस्थानान्तरमेवेति। अधिकन्नामकमिति भावः। असिद्धिपदव्यपदेश्यानां दोषाणां व्याप्तिपक्षधर्मताविरहात्मतां प्रतिज्ञातां रचितुमाह इदञ्च विशिष्टस्यानतिरिक्तत्वमिति। अन्यथा तु पक्षधर्मताविरहपदस्येति। हेत्वाभासप्रथमराशिप्रदर्शनपरमूले इतिशेषः प्रकृतत्वलभ्यः। लिङ्गत्वेनाभिमतमिति। मूलोक्तानुमाने पक्षोऽयं निर्दिष्टः।

मूलपृष्ठम् ४३३—मूले निरुच्यमानमते त्विति। हेत्वाभासान्तरत्वमापद्यत एवेत्यन्वयः। पक्षधर्मताविरहपदमिति। प्रथमराशिप्रदर्शनपरमूलाद्यपङ्क्तिघटकं तादृशपदमिति भावः। असिद्धिव्याप्यत्वेऽपीति। पक्षताविशिष्टनिरूपितधर्मताविरहरूपासिद्धिव्याप्यत्वेऽपीत्यर्थः।

मूलपृष्ठम् ४३४—न चासौ यावत्साध्येति। यावत्साध्यव्यापकव्यापकत्वाभावरूपः स्वाव्यापकव्यापकसाध्यकत्वादिरूपश्च साध्यव्याप्तिविरहः। स्वं=साधनम्। उक्तरूपं चेति। यो यावतां व्यभिचारीत्यादिना प्रागुक्तम्।

मूलपृष्ठम् ४३५—प्रथमोक्तासाधारण्यद्वयेति। यद्यपि निश्चयघटितासाधारण्यस्य सद्धेतुसाधारण्येन व्याप्तिविरहप्रमात्मकोन्नयनजनकता न सम्भवति तथापि व्याप्तिग्रहप्रतिबन्धकता सम्भवत्येवेति प्राचामाशयः।

मूलपृष्ठम् ४३८—ननूदयनाचार्यमते व्याप्तिविरहप्रयोजकतया बाधस्य दूषकताया उक्तत्वात्तन्निषेध एवोचितः, पक्षधर्मताविरहप्रयोजकतया तु दूषकताया अप्रसक्ताया निषेधः कथमित्यत आह साधकबाधकमानेति। न च तथापि प्रतिषेधोऽयं नोचितः, तादृशपक्षताविरहप्रयोजकताया बाधे सूपपन्नत्वादिति वाच्यम्, बाधस्य विशिष्टबुद्धिमात्रविरोधितयाऽनुमितिं प्रत्येव कारणीभूतपक्षतायां तदभावस्याप्रवेशनीयत्वेन तादृशपक्षताया एवाप्रामाणिकत्वात्, साक्षाद्दूषकतासम्भवे परम्परया तदुपगमस्यानौचित्याच्चेत्याशयात्। तथापि प्रकृतग्रन्थे तादृशपक्षताया अनुपक्रान्ततयाऽप्रसक्तनिषेध एव तदभावप्रयोजकतया दूषकतानिषेधः, तादृशपक्षताया बुद्धिस्थतामूहित्वा प्रसक्ततासमर्थनेऽपि प्रकृतमूलग्रन्थे तदनभिधानेन न्यूनता स्यादेव, न च सिषाधयिषात्मकपक्षताया अनुपदमभिहिततया बाधग्रहे च सति तदभावस्य प्रामाणिकतया बाधग्रहप्रयोज्यत्वमेवेति नाऽप्रसक्तनिषेधः; सत्यपि बाधग्रहे इच्छया ज्ञानोत्पत्तेरभ्युपगमात्, तादृशमेव हि ज्ञानमाहार्यमाहुः, न चानुमितेरनाहार्यत्वेन तदिच्छात्मकपक्षताविरहो बाधग्रहप्रयोज्यो भवेदेवेति वाच्यम्, नह्यनुमितित्वप्रकारिकेच्छैव पक्षता, येनैवं स्यात्, यज्जातीया सिद्धिरस्ति, तदन्यजातीयतया ज्ञानेच्छयापि परामर्शसमवधानेऽनुमितिसम्भवादित्याशङ्कोत्तरमुन्नयनकल्पप्रसक्ततासाधारण्येनाह विशिष्टविरहस्यापीति। व्याप्तिविरहलिङ्गभूते व्याप्तिविशिष्टपक्षधर्मताविरहलिङ्गत्वमपि सम्भवत्येव, व्यापकांशे वैयर्थ्यस्यादोषत्वादिति प्रागुक्तम्, एवं विशिष्टघटके प्रयोजकस्यापि विशिष्टप्रयोजकत्वम्। स्थलविशेषे त्वनुमितित्वप्रकारकेच्छाविघटकतया बाधग्रहस्य तादृशपक्षताविरहप्रयोजकतापि भवत्विति वक्ष्यते बाधखण्डनशारदायाम्, पक्षताऽनुगमाभावादिति भावः।

आलम्बनस्य प्रभवेदिति । अधीगर्थदयेशां कर्मणीति सूत्रं स्मर्तव्यम्, निजकन्यकाकुलस्य प्रभवति भवानिति च भवभूतिः प्रायुङ्क्त, 'स एषां ग्रामणी' रिति वैयाकरणग्रामणीपाणिनिनिर्देशेनापि प्रभ्वादिशब्दयोगे षष्ठीं साधुमभिदधति । लिङ्गभावाभिधानस्य न समरन्निति । उक्तसूत्रमत्रापि स्मरणीयम् ।

मूलपृष्ठम् ४४०—इष्ट एवेति । धूमाभाववद्ध्रदविषयकस्येव धूमाभावव्याप्यवद्ध्रदविषयकस्यापि ज्ञानस्य ह्रदे धूमवत्ताग्रहविरोधित्वात्, हेत्वाभासविभागस्य च प्राचीनैरुक्तस्य कथञ्चिद्रक्षणीयत्वादिति भावः । तदुक्तमेवेति । हेत्वाभासप्रथमराशिप्रदर्शनपरमूलाद्यपङ्क्तिव्याख्यायां द्रष्टव्यम् ।

मूलपृष्ठम् ४४४—तथा सतीति । विशिष्टस्य विशेषणाद्यतिरिक्तत्वे सतीत्यर्थः । प्रतियोगितावच्छेदकभेदाद्विरुद्धधर्माध्यासाच्चेति मूलोक्ताभावभेदे हेतुः । सामान्याभावादेरिति । धर्मिभेदधर्मात्यन्ताभावादीनां व्यधिकरणधर्मावच्छिन्नाभावानां च समनियततया भिन्नप्रतियोगिकत्वेऽप्यैक्योपगममते तेषां सङ्ग्रहायादिपदम् । इयं चेति । अव्याप्तिश्चेत्यर्थः ।

मूलपृष्ठम् ४४५—लक्षणान्तरं स्यादिति । यथासन्निवेशे व्यर्थघटितलक्षणे न व्यर्थतेति भावः । असिद्ध्यापत्तेरिति । इदं मूले अपिशब्दस्य समुच्चायकतयासङ्गतिप्रसङ्गमप्युपलक्षयति, स्फुटत्वात्त्वनभिधानमदोषः ।

मूलपृष्ठम् ४४६ – लिङ्गेऽप्रतिपादितान्तनिवेशस्य फलमाह अतीन्द्रियपक्षकादीति । व्याप्तिमत्त्वेनाप्रतिपादितत्वरूपविशेषणाभावप्रयुक्तस्तादृशाप्रतिपादितत्वविशिष्टलिङ्गज्ञापनापेक्षत्वाभाव इति भावः ।

मूलपृष्ठम् ४४७—एवं सत्यसम्भवो विरोधादेरिति । विरोधादेरुद्भावनादित्यन्वयः।

मूलपृष्ठम् ४५१—द्वितीयेऽपि न विशेषणस्य सामर्थ्यमिति । स्वव्यापकत्वांशवैयर्थ्यात् । हेत्वित्यर्थः स्यादिति । तथा चात्रकल्पे साक्षादिति नाध्याहार्यम् ।

मूलपृष्ठम् ४५२—विपक्षेणैव सम्बन्ध इति । मूले नियततत्सम्बन्ध इत्यत्र तत्पदेन विपक्षो ग्राह्य इति भावः । स्वाभिधायकाविनाभावीति । स्वम् = अन्यथासिद्धम्, एवं स्वबोधनेत्यत्रापि ।

मूलपृष्ठम् ४५३—तस्य जातित्वमिति । यदि तु स्थापनाप्रयोगानन्तरप्रयोग एव वाक्यविशेषात्मा जातिस्तदा मूले जातिशब्देन ज्ञेयत्वहेतुप्रयोग एव ग्राह्य इति भावः । एवंच तस्येति प्रयुज्यमानस्य प्रयोगस्य वेत्यर्थकम् ।

मूलपृष्ठम् ४५४*—साध्याभावव्याप्यव्याप्यमिति । साध्याभावव्याप्येत्यनेन साध्य-

---

* एतदग्रिमपृष्ठे उपरिष्टादिति प्रतीकस्यशारदायां तदभावाभावात्मकत्वस्य चेत्यत्रैकमभावपदमधिकं मुद्रितम्, घटाद्यभावत्वकल्पनामित्यत्र तु घटाद्यभावाभावत्वकल्पनामिति पाठो द्रष्टव्यः ।

विरुद्धात्मा साध्याभावपदार्थोऽभिहितः। तयोरसमनैयत्यादिति तयोः = परस्पराधिकरण-वृत्तित्वाभावपरस्पराभावत्वयोः।

मूलपृष्ठम् ४५६—अव्यभिचारांशग्रह इति। सिद्धान्तलक्षणीयाव्यभिचारो व्यापकतात्मा, तद्ग्रहः समानविषयकतया प्राचीनमते साधारण्यग्रहेण प्रतिबन्धनीयः, साध्याव्यभिचरितस्य हेतोः साध्यसामानाधिकरण्यमित्यर्थे तु नव्यमतेऽप्यव्यभिचारांशग्रहः साधारण्यग्रहेण शक्यः प्रतिबन्द्धुम्। सामानाधिकरण्यप्रतियोगिकाभावस्येति। उभयाभावादिसाधारणस्येति भावः।

मूलपृष्ठम् ४६०—विपक्षवृत्तित्वविशेषाभावस्योभयाभावादिसाधारणस्य विरुद्धेऽतिप्रसक्ततयाऽऽह विपक्षवृत्तित्वत्वावच्छिन्नेति। किञ्चैवमनिवेशेऽयं गौरश्वत्वादित्यादौ घटादिरूपविपक्षवृत्तित्वाभावमादायाप्यतिव्याप्तिः, विपक्षवृत्तित्वसामान्याभावस्तु नास्त्यश्वत्वे, अश्वात्मकविपक्षवृत्तित्वात्। इत्थमेव तस्यापीति। तस्य = हेत्वाभासत्वस्य। उक्तत्वादिति। सामान्यनिरुक्तिनिराकृतौ द्रष्टव्यम्।

मूलपृष्ठम् ४६१*—साध्यसमव्याप्ते द्रष्टव्य इति। साध्यसमव्याप्तस्य विरहो हि न क्वापि सपक्षे शक्य उपादातुमिति भावः।

मूलपृष्ठम् ४६४—पक्ष इहानिश्चितेत्यादि। एतत्फलं पक्षोऽनिश्चितसाध्यतदभावको न तु सन्दिग्धसाध्यक इत्यादिनाऽनुपदं परतो व्यक्तम्।

मूलपृष्ठम् ४६५—निश्चितारोपेति। निश्चितस्यारोपेत्यर्थः। वैयर्थ्यमित्युक्तमेवेति। विरुद्धस्य लक्ष्यताया उक्तत्वादिति भावः।

मूलपृष्ठम् ४६७—नञ्पदाभिलप्यत्वविशिष्टतानिवेशादरफलमाह एवञ्चानुयोगितावच्छेदकीभूतेति। तद्व्यावृत्तेति। अनुयोगितावच्छेदकव्यावृत्तेत्यर्थः।

मूलपृष्ठम् ४६८—अपि तु विशेषणविशेषणतावच्छेदकोभयसम्बन्धेति। एतत्सम्बन्धावगाहनं तु विशेष्ये।

मूलपृष्ठम् ४७०†—वासनायामिति। आकाङ्क्षायामुत्पत्स्यमानायामित्यर्थमवगत्य फलितार्थमाह आकाङ्क्षानिवृत्तये इति।

असिद्धान्यत्वमात्रस्य सद्धेतुसाधारण्यादाह हेत्वाभासत्वे सतीतिशेष इति।

मूलपृष्ठम् ४७२—सद्धेतुविषयकस्य च तस्येति। मूले 'वस्तुतः साध्यव्याप्ते' इत्येव पाठस्यादृतत्वादिति भावः।

---

* एतदग्रिमपृष्ठे उपान्त्यपङ्क्तिपूर्वपङ्क्तौ न साध्ये इत्यत्र न साधने इति पाठो द्रष्टव्यः।

† एतदग्रिमपृष्ठटीकायां 'ननु सत्यन्तस्थाने' इत्यत्र 'ननु सत्यन्ते प्रतियोगिस्थाने' इति पाठः। 'ननु दूषकतौपयिक' मित्यत्र तु 'न तु दूषकतौपयिक' मितिपाठः।

मूलपृष्ठम् ४७१—सामानाधिकरण्यग्रहाविरोधित्वमपीति । साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्य केवलस्य तादृशसामानाधिकरण्यग्रहाविरोधित्वमस्तीति तत्र नाव्याप्तिः शङ्क्या, अनुमितिविरोधित्वं तु लक्षणानुसारेण पक्षधर्मतानिश्चयसाहित्यमादाय शक्यं सम्पादयितुम् । स्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वेति । अत्रापि पूर्वोक्तरीत्या साध्यतावच्छेदकरूपेण साध्ये हेतुतावच्छेदकरूपेण हेतोः सामानाधिकरण्यग्रहाविरोधित्वं वक्तव्यमिति स्वपदेन बाधत्वादिकं नोपादातुं शक्यम्, अपि तु साधारण्यत्वादिकमेवेति तदवच्छिन्नविषयकनिश्चयत्वव्यापकत्वं बाधत्वादावपि वक्ष्यमाणसम्बन्धेनेत्यतिव्याप्तिरिति स्वतादात्म्यं प्रथमः सम्बन्धः ।

मूलपृष्ठम् ४७६—यदि तु लाघवादिति । तादृशहेत्वन्तरकत्वमित्यत्र बहुव्रीह्यर्थस्य परामर्शद्वयघटितस्यैव वक्तव्यत्वेन निष्फलं गौरवमित्युदीरितमनुपदम् । इति तु परमार्थ इति । अगृहीताप्रामाण्यकविरुद्धविषयकपरामर्शद्वयसत्त्वेऽनुमित्युत्पत्तिप्रसङ्गासम्भवादित्थं व्याख्यातम् । समशक्तिकत्वेति । समानत्वविशेषणस्योपादातुमशक्यताया उक्तत्वाद् व्याचष्टे परस्परानुमितीति । नच तथापीत्यादि । उक्तस्थले = साध्यसाधकपरामर्शेऽप्रामाण्यग्रहस्थले ।

मूलपृष्ठम् ४७९—सिद्धसाधनादिवत्प्राचीनमते इति । सिद्धसाधनस्य सन्देहादिरूपपक्षताविघटनद्वारोपाधेश्च व्यभिचारधीजननद्वारा दूषणत्वेऽपि हेत्वाभासत्वं प्राचीनमते । विपक्षिवमिदं हेत्वाभासपाञ्चविध्योपपादनोपक्रमे ।

मूलपृष्ठम् ४८०—तन्निश्चयसत्त्वे विपक्षव्यावृत्तत्वनिश्चयसम्भव इति । यावत्साध्यव्यापकव्यापककत्वादिरूपाऽत्र मते व्याप्तिः प्रागुक्ता, तद्विरहावगमस्यासमानाकारतया न विपक्षव्यावृत्तत्वनिश्चयप्रतिबन्धकत्वम्, अपि तु साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहस्यैवेति भावः ।

मूलपृष्ठम् ४८२*—विशेषणसन्देहायत्तोऽत्रेति । असिद्ध्यादिरहितहेत्वन्तरकेत्यत्रासिद्ध्यादिरहितत्वरूपविशेषणसन्देहमभिप्रेत्येदम् । वस्तुतस्त्वित्यादि । तच्च = असिद्ध्यादिहीनत्वञ्च ।

मूलपृष्ठम् ४८६—परोद्भावितदोषापरिहारे हीति । यत्र वादी स्वहेतुसाधारण्यं व्याप्त्यादिभङ्गदोषं जानन् प्रतिहेतुनिष्ठतया परस्योद्भावयति परश्च परिहर्तुं न शक्नोतीति मूले प्रागुक्तस्थले एव प्रतिज्ञातदोषानिर्वाहोऽत्राभिहित इति भावः ।

मूलपृष्ठम् ४९५—इन्द्रियज्ञानस्यापि पक्षधर्मताज्ञानवद्बलत्वमस्तु, एवञ्च दोषासमवहितत्वमेवेत्येवकारासङ्गतिरत आह इन्द्रियस्य स्वरूपसत इति ।

मूलपृष्ठम् ४९७—पक्षताविरहस्य प्रामाणिकत्वादिति । एतावतैव पर्वतो वह्निमान् धूमादित्यत्राश्रयासिद्धत्वोक्तिरिति भावः ।

*४८५ पृष्ठे टीकायां—'धर्म्याहिग्राहकमाधितस्तु' इत्यत्र 'धर्म्याहिग्राहकस्तु' इति पाठः ।

मूलपृष्ठम् ४६८—ज्ञानादेः प्रत्यक्षाभासादिव्यापकस्येति । समवायेन ज्ञानवान् घट इत्याहार्यः प्रत्यक्षाभासोऽत्रोदाहर्तव्यः, तद्व्यापकत्वमस्त्येव समवायसम्बन्धावच्छिन्नं ज्ञाने, विषयतासम्बन्धेन ज्ञानप्रकारकत्वे तु याथार्थ्यमेव स्यात्, घटाविषयकज्ञानस्यैव प्रकारत्वे तु याथार्थ्याभावेऽपि विषयतासम्बन्धेन व्यापकताऽनुपपत्तेः, प्रत्यक्षाभासस्य विषयतया घटे सद्भावेऽपि प्रकारीभूतज्ञानस्य विषयतया तत्रासद्भावात् । उपनयमहिम्ना च चाक्षुषादावपि ज्ञानभानसम्भवः ।

मूलपृष्ठम् ४६६—कारणविरह एव चेति । प्रस्तुतकारणं पक्षता । न तु तत्प्रतीतिरपीति । एवञ्च पूर्वं पक्षताविरहप्रतीत्याऽनुमित्यनुत्पादनिर्वाहेणोक्तबाधितत्वग्रहस्यान्यथासिद्धत्वं यदभ्यधायि, तन्नोचितम्, नापि तादृशबाधितत्वज्ञानस्य पक्षताविरहप्रतीत्यात्मकत्वेनैव कार्यानुत्पादप्रयोजकत्वसम्भवे साध्याभावविषयकत्वमकिञ्चित्करमित्यपि वचनीयम् ।

मूलपृष्ठम् ५००—पक्षप्रतीतिविषयांशस्येतीति । अत्रेतिशब्दस्य लुप्ततृतीयान्ततया इत्यनेन पर्यवसातव्यमित्यर्थः पर्यवस्यति । भ्रमतायाः सम्भाव्यत्वादिति । तथा च पक्षताभ्रमानुकूलत्वं साध्याभावबोधे, ग्राह्याभावाद्यनवगाहिनश्च तस्य साक्षादपि पक्षताभ्रमविरोधित्वमसम्भाव्यमेवेति भावः ।

मूलपृष्ठम् ५०४—आस्कन्दते इति । बलात् स्पृशति, आश्रयत इति तात्पर्यम् । घटपटयोः प्रतियोगितानवच्छेदकरूपेणेति । प्रतियोगिता घटात्यन्ताभावपटात्यन्ताभावीया । संसर्गतया भूतलसंयोगादेर्धर्मविधया च घटत्वादेरत्यन्ताभावप्रतियोगितावच्छेदकत्वम्, भेदीयप्रतियोगितायां तु घटादितादात्म्यस्यैवावच्छेदकत्वम् । एवञ्च यद्यप्यत्यन्ताभावप्रतियोगितावच्छेदकरूपावच्छिन्ना घटपटयोर्भेदवत्ता सम्भवति, अप्रयोजकत्वं तु प्रतियोगितानवच्छेदकरूपेणावच्छिन्नया भेदवत्तया प्रयुक्तायां भिन्नप्रतियोगिकतायामुक्तम्, तथापि यथा भेदीयप्रतियोगितानवच्छेदकरूपावच्छिन्नां भेदवत्तामादाय सम्पादितायां भिन्नप्रतियोगिकतायां घटो न पटः, पटो न घट इति भेदद्वैतसाधनेऽप्रयोजकतोक्ता, तथा येन रू[illegible]त्यन्ताभावं प्रति प्रतियोगित्वं तेन रूपेण न भेदं प्रति प्रतियोगित्वं घटपटयोरित्यत[illegible]भावप्रतियोगितानवच्छेदकतत्तत्तादात्म्यावच्छिन्नप्रतियोगिताकभेदमादाय सम्पादितायां भिन्नप्रतियोगिकतायां घटात्यन्ताभावपटात्यन्ताभावयो र्भेदसाधनेऽप्रयोजकत्वं कुतो न स्यात् । तस्माद्येन रूपेण घटः पटो नेत्यत्र घटस्य भेदवत्त्वम्, तेनैव रूपेण पटो घटो नेत्यत्र तस्य प्रतियोगित्वमित्यवश्यं मन्तव्यम्, अन्यथा भेदीयप्रतियोगिताश्रयतावच्छेदकयोः सर्वत्र भेदे यदि येन रूपेण प्रतियोगिता तदन्यरूपेण भेदवत्ताया भेदद्वित्वसाधनेऽप्रयोजकत्वं तर्हि केन रूपेण भेदवत्तायास्तत्र प्रयोजकत्वमित्यत्र मौनमेव स्यादिति भावः ।

मूलपृष्ठम् ५०५—यादृशार्थकप्रकृतीति । सुबादीनां स्वरूपपरतायां प्रकृतित्वेन सामान्यतः प्रकृत्यन्यत्वघटितलक्षणं प्रकृतिभावानापन्नव्यक्तिविशेषे सम्भवदप्यव्याप्तिग्रस्तम्, अतो यादृशार्थकेति प्रकृतिविशेषणम्. तथाचैकत्वाद्यर्थकप्रकृतिभिन्नत्वं तत्रास्त्येव, एकत्वाद्यर्थे एव च तेषां प्रत्ययत्वं सम्पादनीयम् । समुच्चयार्थे चकारस्य प्रत्ययत्वं प्रसज्यते, तदर्थकप्रकृतिभिन्नत्वात्, स्वरूपपरतायां च निपातान्यत्वात्, अतो निपातेऽपि विशेषणं यादृशार्थकेति ।

तथा च समुच्चयार्थकनिपातान्यत्वं तत्र नास्तीति नातिव्याप्तिः। पशुना रुद्रं यजत इत्यनेन पशुं रुद्राय ददातीति बोधो निरूढलक्षणया, प्रत्ययानामाधुनिकलक्षणयाऽबोधकत्वनियमात्, 'यजेः कर्मणः करणसञ्ज्ञा सम्प्रदानस्य च कर्मसञ्ज्ञा' इति तु निरूढलक्षणाग्राहकम्।

मूलपृष्ठम् ५०७—तदीयतत्संसर्गबुद्धौ चेति। यद्यनुमितौ वृत्तित्वस्य संसर्गो भायात्, तदा स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावविषयकत्वरूपतादृशबाधग्रहनिष्ठधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं वृत्तित्वीयस्वरूपसम्बन्धविषयकबुद्धित्वमनुमितिनिष्ठं स्यादिति भावः।

मूलपृष्ठम् ५०८—तादृशविषयित्वावच्छिन्ने सद्भावादिति। प्रतियोग्यवृत्तिधर्मस्यैव भेदानुयोगितावच्छेदकत्वेन मूलोक्तरीत्या तादृशविषयतान्तःपातिप्रकारतात्वस्योद्देश्यतावच्छेदकताभेदानुयोगितावच्छेदकतानुपपत्त्या तादृशभेदस्य दुर्ग्रहत्वमपि द्रष्टव्यम्। एतच्चेति। तत्तद्विशेषणवारणीयदोषाणां तत्तद्विशेषणोपादानेऽपि सत्त्वसमर्थनं चेत्यर्थः।

मूलपृष्ठम् ५०९—वचनसूकलितेति। वचनानां प्रसूः = कुण्डलिनी शक्तिः, तया कलितो=युक्तो द्वादशान्तगोऽमलो बिन्दुः शिवात्मकः, तद्रूता, शक्तिशिवयोरैक्यात्मकसामरस्यरूपत्वात्, तथा च तदुभयात्मिकेति तात्पर्यम्। कलापदार्थं त्वनुपदं वक्ष्यामः। मन्त्रपक्षे तु वचनसूकलितेति वाग्भवबीजपुटितत्वाभिप्रायकम्। पूर्वार्द्धेऽर्थतो वर्णतश्च भुवनेश्वरीबीजोद्धारः, बिन्दुकलयोश्च तद्घटकत्वं सुविदितमेव, उक्तबीजे प्रथमेन वर्णेन प्रकाशशक्तिं द्वितीयेन संहारशक्तिस्तृतीयेन विसर्गशक्तिर्बिन्दुना तु सर्वसामरस्यमुच्यत इति तु व्याख्याप्रकारान्तरमिति। ॐ तत् सत्। इति हेत्वाभासखण्डनशारदायां राजहंसः।

इति कविताकिङ्कचक्रचूडामणिश्रीश्रीहर्षप्रणीतखण्डनखण्डखाद्यस्य शारदाख्यव्याख्याकृता शङ्करचैतन्यभारत्या कृते राजहंसाभिधे शारदामानसोन्मीलने प्रथमः परिच्छेदः।

---

१ अत्र टीकायां तत्वंसर्गाभावेत्यशुद्धं मुद्रितम्।

## खण्डनखण्डखाद्यस्य द्वितीयतृतीयचतुर्थपरिच्छेदेषु शारदाख्य-व्याख्यायां राजहंसो नाम मानसोन्मीलनम् ।

मूलपृष्ठम् ५१०—यस्याः प्रसादमिति । खेदुषः = प्राप्तवतो यतेः = जितेन्द्रियवर्गस्य, यस्य कस्यापि साधकस्येति यावत् । जल्प एव शिल्पं = कला, तस्य विकल्पा नानाप्रकाराः । अलीकतया मिता = विशिष्टा, अलीकतामिति द्वितीयान्तं वा, इता = प्राप्ता भवति । बिन्दुनादेति ।

'बिन्दुः प्रोक्तः शिवः शक्तिः कला नादस्तयोर्मिथः ।
समवायः समाख्यातः शैवागमविशारदैः ॥'

इति शारदातिलकोट्टङ्कितप्रस्थाने शिवस्य शक्तेश्च क्षोभ्यक्षोभकभावसम्बन्धो नादः । एवञ्च 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति गीतासु बिन्दुरस्मत्पदार्थः शिवात्मकः, इच्छाज्ञानक्रियात्मकत्वात् त्रिकोणतां गता योनिस्तु कला, गर्भाधान तत्प्रयोजको वा नाद इति द्रष्टव्यम् । किञ्च परशिवबिन्दोः क्षुब्धावस्था नादात्मेति जीवोऽपि नादपदेन शक्योपादानः, एवञ्च शिवशक्तिनरात्मकं तत्त्वत्रयं द्वादशान्त—भ्रूमध्य-हृत्पद्ममध्येयं परवाग्रूपसरस्वत्यात्मकस्य विश्वविमर्शस्यावस्थाविजृम्भितमासूत्रितमत्र ।

'उदितायां क्रियाशक्तौ सोमसूर्याग्निधामनि ।
अविभिक्तः प्रकाशो यः स बिन्दुः परमो हि नः ॥'

इति तन्त्रालोके । 'सृष्टा बहिः परञ्चिता प्रकृतिर्विसर्गस्तां स्वात्मना कवलयन् शिव एष बिन्दुः' इति तु मातृकाचक्रविवेके । अयं च क्वचित्सृष्ट्युन्मुखतां गतः कारणबिन्दुरित्युक्तो विमर्शशब्दब्रह्मापरपर्यायस्वभावमनुभवति, कारणबिन्द्वात्मना व्यापकस्यापि यस्य स्वस्य मूलाधारेऽभिव्यक्तिमामनन्ति । कला तु शिवसाकल्यहेतुः शक्तिः, तां विना तस्य विकलत्वात् । किञ्च बिन्दुनादयोः = प्रकाशविमर्शयोः कला = कलना सामरस्यमिति यावत् । किञ्च वर्ण-पद-मन्त्रात्मा कालाध्वा नादः, भुवन—तत्त्व—कलात्मा देशाध्वा तु कलापदोपलक्षितः, तयोर्यतः प्रसरः स बिन्दुः = संवित् । कलास्तु देशाध्वघटका निवृत्त्याद्याः[1] प्रसिद्धाः । तत्त्वानि तु षट्त्रिंशद्दर्शनसर्वस्वे स्वातन्त्र्यवादे द्रष्टव्यानि । कालाग्निनरकपातालादिकानि तु भुवनानि । किञ्चान्तर्निलीननिखिलशक्तिकस्य बिन्दोः संसारप्रसरोन्मुखी क्वचिदवस्था नादः, ततश्च किञ्चित्कर्तृत्वात्मककलोपलक्षितपशुत्वविशिष्टस्य जीवस्य प्रसर इति । सत्तेति । त्रिकालाबाध्यस्वरूपतेव पूर्णाहन्ताविमर्शनात्मा मन्त्रवीर्यतया प्रथिता सत्ताऽप्यत्र विवक्षिता । 'विद्याशरीरसत्ता मन्त्ररहस्यम्' इति शिवसूत्रात् । विद्याशरीरं = शब्दब्रह्म । ततेत्यनेन विश्वोत्तीर्णत्वं विश्वमयत्वं चोच्यते । तत्राद्यं दिक्कालानवच्छिन्नत्वे द्वितीयं तु वस्तुपरिच्छेदशून्यत्वे पर्यवस्यति ।

अभ्युपगतपरमिति । अनाहार्यनिश्चयविषयोऽभ्युपगतपदेनोच्यते ।

---

१ निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता ।

मूलपृष्ठम् ५११—मूले कालदेशादिभेदेन सत्त्वासत्त्वाभ्युपगमेऽतिप्रसङ्ग इति। एकस्यैव वस्तुनः कालदेशादिभेदेन सत्त्वस्वीकारास्वीकारावादायातिप्रसङ्गः इत्यर्थः। तस्यैव वस्तुनः। तेनैव पुंसा। अभावबोधनमेव वक्तव्यमिति। अभावबोधनस्यैवोद्देश्यतया विवक्षितत्वसम्भवेन वक्तव्यमिति क्लीबता नावमन्तव्या।

मूलपृष्ठम् ५१३—विवक्षणेऽव्याप्तिरिति। क्रमेण परेण दूषणाभिधाने मौर्ख्योत्तारणार्थं परकीयं क्रममनिराकृत्यैव विशेषणान्तरविशिष्टतयाऽभिधानस्थलेऽव्याप्तिरिति भावः। ननु चैत्रेण पूर्वोक्तरीत्यैव पुनरभिधानस्थले तदीयविशेष्योक्तिसमानकालिकत्वं तदानीन्तन्यां पुरुषान्तरीयायां विशेषणानुक्तौ वर्तत इत्युक्तदोषतादवस्थ्यम्, तत्राह अनुक्तिं हि विशेष्योक्तीति। तथा च तदा विशेष्योक्तिसमानकर्तृकविशेषणोक्तेरभाव एव नास्तीति कथं दोषः।

मूलपृष्ठम् ५१४*—अव्याप्तिः = असम्भव इति। उक्त्यनुक्त्योरेकदाऽनुपपत्तेरिति भावः। एवमेव 'दूषणत्वमेव न स्याद्' इति परतोऽपि बोद्धव्यम्।

मूलपृष्ठम् ५१६—पूर्वानुक्तत्वं विवक्षार्हमिति। तथा च तत्स्थाने विशेषणान्तरनिवेशशङ्कापि सम्भवति। तदभावसम्पादनेति। उभयाभावादिक्रमादायेति भावः।

मूलपृष्ठम् ५२७—मूले भवता व्याघात एवेति। भवता = नैयायिकेन।

मूलपृष्ठम् ५३०—प्रतिज्ञासन्न्यासादिलक्षणानामपीति। असाधनाङ्गवचनम्, दोषेऽसत्यपि तदुद्भावनम्, अप्रतिभेति त्रयमेव निग्रहस्थानानाम्, हेत्वाभासप्रयोगोऽप्यसाधनाङ्गवचनमेव, अन्यानि तु निग्रहस्थानानि कानिचिन्नैव स्वीक्रियन्ते, कानिचिच्चोक्तान्तःपातीन्येवेति धर्मकीर्तिमतस्यापि पार्थक्येन निराकरणं नात्राहृतम्, उक्तत्रयस्य निरस्तरीतिभिरेव परिष्कार्यत्वादितिभावः।

मूलपृष्ठम् ५३१—कादम्बिनीति। मेघपङ्क्तित्वेनाध्यवसिता श्रीकृष्णतनूः। विद्वद्भिन्ने लक्षणेति। यावदुक्तं भवति त्वदन्या तत्तद्व्यक्तिर्विद्वद्भिन्नेति तावदुक्तं भवति त्वदन्यो न कोऽपि विद्वानिति।

मूलपृष्ठम् ५३३—यद्धर्मप्रकारकबुद्ध्या यस्य तत्पदादेः प्रयोगस्तद्धर्मविशिष्टे तस्य तत्पदादेः शक्तिरिति मतं निराकरोति एवञ्च स्वप्रयोजकप्रकारत्वस्येति।

मूलपृष्ठम् ५३५—'नास्तीतिप्रतीतिविषयत्वेऽपि च घटादेर्भावत्वानिवृत्ते'रिति मूलं नाव्याप्तिपरतया योजनार्हम्। अन्ततो भगवत एवास्तीतिप्रतीतिमादायाव्याप्तेर्वारणादित्याशयेनान्यथा व्याख्यातुमाशङ्कते। नन्वेतेन रूपेणेति।

मूलपृष्ठम् ५३६—अभावो नास्तीति प्रतीतेः स्वरसतोऽनुदयात्, कथञ्चिदधिकरणविशेषं स्पृशन्त्या उदयेऽपि भ्रमत्वात्, अभावस्य केवलान्वयित्वात्, अभावत्वावच्छिन्नाभावस्य क्वचिदप्यभावात्, लक्षणे च प्रमात्वविवक्षाया आवश्यकत्वात्, अन्यथा भ्रमेऽभाव-

* एतदग्रिमपृष्ठे टीकायां द्वितीयपङ्क्तौ यत्किञ्चिद्विशेषणेत्यत्र यत्किञ्चिद्विशेषणोक्तीति पाठो द्रष्टव्यः।

त्वेनापि रूपेण कस्यचिद्भावस्य. भानसम्भवेनाव्याप्तिप्रसङ्गादित्यभिप्रेत्य विशेषपरतया व्याचष्टे—भूतले घटाभावो नास्तीति। नचैवमस्या मते यथार्थतयाऽग्रे 'अत्यन्तासत्यपी'ति न्यायेनोत्पत्तिसमर्थनविरोधः; अत्यन्तासद्विषयकस्यापि शाब्दस्य सम्भवे सद्विषयकस्य सुतरां सम्भव इत्यभिप्रायेणोत्तरग्रन्थस्य व्याख्यातत्वात्। भूतलाद्यंशमादायोक्तमतेः सविषयकत्वसम्भवादन्यथा व्याचष्टे—निर्विषयत्वं निर्विधेयताकत्वमिति। परन्त्वेवं विधेयतानिरूपकत्वनिषेधे उद्देश्यतानिरूपकत्वस्याप्यनुपपत्त्या निर्विकल्पकतां च शङ्क्याप्यनालिङ्गन्त्यास्तादृशमतेरनुत्पत्तिरेवापादिता भवति, अत्रेष्टापत्तिमभिप्रेत्य त्वाह मूले नैवं प्रतीतिरेव स्यादिति। उक्तरीत्या भावाभावविषयकत्वानुपपत्तौ तादृशप्रतीतिरपलप्यैवेति भावः। एवञ्चाग्रे सम्भवादित्यस्यापलपितुमशक्यत्वान्नेष्टापत्तिरित्याशयः। प्रत्यक्षे घटादेर्भावमुखेनैव भानौचित्यमनुचिन्त्य शाब्दप्रतीतिपर्यन्तानुसरणम्। टीकायां सद्विषयकत्वमेवेति। अन्यथाऽलीकविषयकप्रतीते विषयप्रश्नानौचित्यात्। एवञ्च वस्तुगत्यैव सद्विषयकत्वम्, परप्रतिषेधात्मना भावावगाहितया तु प्रकृतलक्षणवादिमतेऽसद्विषयकत्वमभिमानमात्रेण परमुच्यतामितिभावः।

मूलपृष्ठम् ५३७—कल्पद्वयं निरस्यतीति। यथाव्याख्याते नानया रीत्या विकल्पद्वूषणदानसम्भवः, विषयस्यैव विशेषणत्वात्, प्रत्यक्षशाब्दान्यतरविषयत्वस्य च विशेष्यत्वादित्यस्वरसादाह वस्तुतस्तु सर्वत्रेति।

षट्पदार्थीत्युचितं स्यादिति। स्यादित्युक्त्या षट्सङ्ख्याकपदार्थैतिमध्यमपदलोपिसमासे यथाश्रुतस्यापि सम्यक्त्वमनुमन्यते। परन्तु शाकपार्थिवादौ पूर्वपदे लक्षणयैव निर्वाहेण मध्यमपदलोपिसमासस्याप्रामाणिकत्वपक्षे निष्प्रयोजनलक्षणाप्रयुक्तगौरवमसहमानेन षट्पदार्थीत्यस्यौचित्यमुक्तम्। मध्यमपदलोपेऽपि च तदनुसन्धानस्य शाब्दबोधार्थमपेक्षणीयतया गौरवमेव। लक्षणापक्षे च षडिति पदस्य न षट्सङ्ख्याके लक्षणा, तद्बोधस्य स्वभावसिद्धत्वात्, 'आदशान्ता सङ्ख्या सङ्ख्येये' इति हि वदन्ति। किन्तु पदार्थपदस्य समुदायविशेषपरतया षट्पदेन षडवयवकत्वावच्छिन्नो लक्षणीयः। वस्तुतस्तु नायमप्यर्थो व्युत्पन्नैः स्वरसतः प्रतीयते, विशिष्य द्रव्यादिपर्याप्तषट्त्वावच्छिन्नस्य प्रतीतिस्तु स्वारसिकीति तस्मिन्नेव पूर्वपदस्य लक्षणा, समासस्तु कर्मधारय इति शब्दशक्तिप्रकाशिकाकृत्, पञ्चमूलीत्यादिद्विगौ तु सामान्यतो मूलपञ्चकत्वेनैव प्रतीतिरिति विशेषः, अभेदेन पूर्वोत्तरपदार्थयो बोधस्तूभयत्रापि समानः। समाहारे पुनर्द्विगोरावश्यकत्वेन क्लीब् दुर्वारा, पात्रादित्वकल्पने षट्पदार्थीत्यादिप्रयोगणामप्रामाणिकतापत्तिः, तस्मात् प्रयोक्तृस्वातन्त्र्यमेवात्र समर्थकं वक्तव्यमिति भावः।

मूलपृष्ठम् ५३६—मूले भावभेदयोरेव प्रसङ्गादिति। प्रसङ्गादेवेत्यन्वयः। भावार्थत्वे चेति। अत्र कल्पे घटविधिरेव घटाभावस्य भाव इत्यर्थपर्यवसानमभिप्रेत्याह टीकायाम्—द्वितीये घटाभावस्येत्यादि।

मूलपृष्ठम् ५४०—भेदविशिष्टान्यत्वस्वतयेति। वैशिष्ट्यं स्वप्रतियोगिवृत्तित्वस्वातु

योगिवृत्तित्वाभ्यां प्रसिद्धमेव। दत्तमुत्तरमिति। अखण्डोपाधेः प्रतीतिविशेषेणैव निरूपणीयतया प्रतीतितद्विषययोः प्रमात्वसत्यत्वे परस्पराश्रयपरास्ते इति भावः। स्ववृत्तिभेदेति। भेदत्ववृत्तिभेदे भेदत्वं वर्तते चेदन्योन्याश्रयः, अन्यथा तु भेदस्याभेदत्वप्रसङ्गः, एवमभावत्ववृत्तिभेदेऽभावत्ववृत्तावन्योन्याश्रयः, अन्यथा तु भेदेऽभावत्वविलोपापात इति भेदत्वाभावत्वयोः साधारण्येन निरासः।

मूलपृष्ठम् ५४२–न तौ स्मृताविति। तौ=इनिठनौ। स्वत्वान्, कारकवान्, सिंहवान्, पण्डितवती शालेति क्रमेणोदाहरणानि।

मूलपृष्ठम् ५४३—मुले सामानाधिकरण्योल्लेखिनेति। समभिव्याहृतसमानविभक्त्यन्तपदाभिलप्यतया सामानाधिकरण्यमिह तादात्म्यम्। एवं परतः 'सामानाधिकरण्यव्यवहारः' इत्यत्रापि। समभिव्याहृतसमानविभक्त्यन्तपदाभिलापजन्यप्रतीतिसमानविषयकेनेत्येव वार्थः। विनाप्यधिकरणम्=धर्मिणम्।

मूलपृष्ठम् ५४४—अन्यथा वैलक्षण्यस्येति। अन्यथा=तथाबोध्यमानत्वाभावे। लक्षणविषयकज्ञानस्य प्रवेश इति। लक्षणस्य सम्बन्धितया सम्बन्धिविषयकज्ञानस्य च लक्षणघटकतयेति भावः।

मूलपृष्ठम् ५४७–नचास्तु द्रव्यलक्षणे इति। प्रवेश इति सम्बन्धः। सामान्यसामान्याभावनिरासस्येति। प्रथमं सामान्यपदं जातिपरम्। सामान्याभावस्तु सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावः प्रसिद्ध एव। सत्ताया जातित्वासिद्धाविति। नन्वेवं सत्तामादाय सामान्यवत्त्वांशसमन्वयो मा भूत्, मा च भूद्गुणत्वकर्मत्वे आदायापि, तयोरपि निरस्तत्वात्, रूपत्वादिकमुत्क्षेपणत्वादिकं चादाय तु स्यात्, मैवम्, प्रत्येकमिलितविकल्पानुपपत्तेरुद्धार्यत्वात्, सामान्यत्वस्य निरसिष्यमाणतया तेनानुगतीकृत्य रूपत्वादीनां निवेशस्याशङ्कनीयत्वात्, वस्तुतस्तु धूमवान् पर्वत इत्यादीनां प्रतीतीनां तत्तद्धूमवत्त्वावगाहितयैवोपपत्तौ यथा धूमत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणता नोपेयते तथा सामान्यत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताऽपि नोपेतव्या, सामान्यवत्त्वप्रतीतेस्तत्तत्सामान्यवत्त्वावगाहितयैव चारितार्थ्यादिति सामान्यत्वेनानुगतीकृत्य रूपत्वादिनिवेशेऽपि न प्रत्येकमिलितविकल्पानुपपत्तिं वारयितुं शक्यत इति भावः।

मूलपृष्ठम् ५४८ *—समवायसिद्धिं विना सिद्ध्यतीत्यन्योन्याश्रय इति। यदवच्छिन्नेत्यत्रावच्छेदकता यदि सम्बन्धसामान्येन संयोगेन वावच्छिन्ना प्रविष्टा तदा घटीयरूपं प्रति पटादे घंटादिकञ्च प्रति भूतलादेरपि प्रसङ्गोऽयुतसिद्धत्वस्य, समवायेन प्रविष्टा चेत्तदाऽन्योन्याश्रय, इत्यर्थः। एवं यावत्सत्त्वं सम्बद्धत्वमित्ययुतसिद्धिलक्षणेऽपि द्रष्टव्यम्, सम्बन्धसामान्यस्य संयोगस्य वा प्रवेशे शरीर एवोत्पन्नविनष्टयूकादावतिप्रसङ्गात्; समवायविवक्षणे तु स्पष्टत्वादन्योन्याश्रयस्येति भावः।

मूलपृष्ठम् ५४९–तत्प्रयोजकत्वं लक्षणमिति। एवञ्च सामग्रीत्वेन रूपेणादृष्टत्वादिना

* टीकायामत्र पृष्ठे सम्बन्धान्तरस्यापि कल्पनापातादितीत्यस्याग्रे प्रोक्तमिति त्रुटितम्।

च नातिव्याप्तिस्थलत्वम्, तेन रूपेणानुगताकारतातिरिक्तं प्रत्यपि प्रयोजकत्वादिति पूर्वपक्षाशयः। विशेषरूपेणातिव्याप्तिस्थलतां त्वभिप्रेत्याह मूले सिद्धान्ती स्वसामग्र्यामपीति। शारदायां तदतिरिक्ताजननादिति। अनुगताकारतासामग्र्याः स्वध्वंसं प्रति सामान्यतः प्रतियोगित्वेन विशिष्य तु तद्व्यक्तित्वेन प्रयोजकत्वेऽपि येन रूपेणानुगताकारतां प्रति प्रयोजकत्वं तत्सामग्रीत्वेन, तेन रूपेण न ध्वंसं प्रति प्रयोजकत्वम्। न चानुगताकारतातिरिक्तप्रयोजकतानवच्छेदकाभिन्नत्वमनुगताकारताप्रयोजकतावच्छेदके किमिति विवक्ष्यते, तथाऽविवक्षणेऽसम्भवप्रसङ्गादित्याह मूले भेदप्रतिपत्त्यादाविति। तादृशविवक्षायां हि जातित्वेनानुगताकारतां प्रति प्रयोजकत्वम्। इतरभेदानुमित्यादौ तु गोत्वत्वादिनेत्यदोषोऽयम्। वस्तुतस्तु जातिमान् स्वेतरभिन्नः जातेरित्यनुमितौ ज्ञायमानजातित्वेनापि प्रयोजकत्वमस्त्येवेत्यसम्भवो दुर्वारः। अदृष्टविशेषादेस्तद्व्यक्तित्वेनैव स्वध्वंसमनुगताकारतां च प्रति प्रयोजकत्वसम्भवेनातिव्याप्तिस्तु तत्र मा नामास्तु, परन्त्ववच्छेदकपर्यन्ताननुसरणेऽपि स्वध्वंसस्यापि जनकत्वेनादृष्टविशेषादौ नेयम्, नापि च सामग्र्याम्, उक्तरीत्याऽवच्छेदकपर्यन्तानुसरणसाफल्यानाकलनात्, तस्मादसम्भव एवेति। इदन्त्ववधेयम्, स्वरूपसतः सामान्यस्य नानुगताकारताप्रयोजकत्वम्, गोत्वादिविषयकानुगतभ्रमस्यापि क्वचित्सम्भवात्, तत्र च गोत्वादेरभावात्, नापि ज्ञायमानस्य, अनुगतप्रतीतेः पूर्वं सामान्यज्ञानस्याभावात्, निर्विकल्पके प्रमाणाभावात्, विशिष्टबुद्धित्वेन विशेषणबुद्धित्वेन च कार्यकारणभावस्य निरस्ततया तद्बलान्निर्विकल्पकसाधनानुपपत्तेः। अतोऽप्यन्यथाऽऽशङ्कते मूले एतत्प्रतिपत्तीति। टीकायां कार्यमात्रप्रमाणकत्वं नास्तीति। अदृष्टविशेषादीनां तु सामान्यतः शास्त्रेणापि गम्यमानतया कार्यमात्रप्रमाणकत्वाभाव इति न तेष्वपि प्रसङ्गः। लौकिकशब्देन सामग्र्याः सर्वत्रानवगमेऽपि शास्त्रेण सामान्यतस्तस्या अप्यवगमसम्भवे तु कार्यमात्रप्रमाणकत्वाभावस्तस्यामपि स्पष्ट एवेति। अनुगतविषयकत्वावच्छिन्नत्वविशिष्टस्य व्यक्तिप्रभृतिविषयकत्वावच्छिन्नत्वविशिष्टस्य च भेदमाशङ्क्याऽऽह विशिष्टस्यातिरिक्तत्वमिति।

मूलपृष्ठम् ५५०—अनेकदिगवच्छेदेन वृत्तेरिति। न च निरवयवतया परमाणोः संयोगेन क्वचिदधिकरणता नानुमन्तव्या; एवं सति निरवयवतयैव संयोगोऽपि तस्य नानुमन्तव्य इति तुल्यमिति भावः।

मूलपृष्ठम् ५५२— अभावादावतिप्रसङ्गादिति। अभावत्वं व्यापकतावच्छेदकमुपादायेति भावः।

मूलपृष्ठम् ५५३—स्वसजातीयेतरभेदानुमितिविषय इति। विशेषविशेष्यिकाया अपि तादृशानुमितेः सिषाधयिषाबलेन सम्भवादसम्भवस्याव्याप्तेर्वा वारणाय सिषाधयिषानुक्तेरेति।

मूलपृष्ठम् ५५४—व्यावृत्तिमत्तयाऽवबुद्धत्वादेवेति। नान्येन व्यवावृत्तिमत्तयाऽवगमः, किन्तु स्वतः इति यदि तदाह अन्यथाऽऽत्माश्रयादिति।

मूलपृष्ठम् ५५६*—बहुव्रीहेस्तलिति । तदाधारत्वादित्यत्र मूले तत्पदं नियम्यत्वेनाभिमतव्यक्तिपरमिति भावः ।

मूलपृष्ठम् ५५७—आधारत्वाधेयत्वयोस्तुल्यवित्तिवेद्यत्वादिति§ । तथा च कुण्डे बदरं शशे शृङ्गाभाव इत्यादावाधेयतैव भासते नत्वाधारतेति तादृशप्रत्ययमादायाव्याप्तिं कुत उक्तवानसीति मा वद, मा चास्मदीयां तादृशप्रत्यये आधारत्वांशे भ्रमत्वप्रसङ्गभणितिमरमणीयां मन्यस्व, बदरसमवायित्वरूपाधारत्वाभाववति कुण्डे तादृशाधारत्वावगाहित्वात् ।

अप्रसिद्धत्वादिति । तथा चाधारत्वघटकसमवाये शृङ्गाभावप्रतियोगिकत्वस्य विषयीकरणेनैव तादृशप्रत्यये भ्रमत्वमापाद्यम्, शृङ्गाभावसमवायित्वाप्रसिद्धौ शृङ्गाभावप्रतियोगिकत्वस्य समवायेऽनुपपन्नताया एव बीजत्वादिति भावः ।

मूलपृष्ठम् ५६१ †—अखण्डोपाधिमात्रनिरासाच्चेति । प्रतीतिविशेषेणैवाखण्डोपाधिनिरूपणेन विषयसत्यतानिरूपणं विना च प्रतीतेः प्रमात्वस्याश्रद्धेयत्वेनान्योन्याश्रयात्, साक्षात्कारित्वखण्डनशारदायां दर्शनसर्वस्वे चानुगतधर्ममात्रस्य निरस्तत्वादिति भावः ।

मूलपृष्ठम् ५६२ ‡—अभावाभावस्यातिरिक्ततोपगमेनेति । एवमुपगमेऽपि रूपज्ञानस्य स्वाभावप्रतियोगिकत्वं मा भूत्, स्वाभावप्रतियोगित्वं त्वस्त्येवेति तावतैव तदीयत्वनिष्पत्त्याऽतिव्याप्तिः, प्रतियोगित्वसम्बन्धराहित्यस्याप्युक्तौ तु सर्वं जीवनिष्ठं ज्ञानं ध्वंसप्रतियोगीति ज्ञानस्य स्वध्वंसविषयकत्वं न स्यात्, प्रतियोगितातिरिक्ततत्सम्बन्धवत्त्वोक्तौ तु रूपज्ञानादावुदासीनवस्तुनः कालिकसम्बन्धमादायातिव्याप्तिरिति ध्वनयन्नाह इति द्रष्टव्यमिति ।

अन्यथेच्छामात्रस्थल इति । इच्छानिष्ठे तादृशवृत्तित्वात्मकोत्तरत्वे प्रविष्टज्ञानविषयत्वमेवेच्छाया विषये सम्बन्धः । स्वाव्यवहितपूर्वक्षणवर्तिज्ञानविषयत्वं त्विच्छासम्बन्धतया नोच्यते, नित्येच्छाऽव्यवहितपूर्ववृत्तित्वसाधारण्यस्य रक्षणीयतया स्वाधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वे सति स्वाधिकरणक्षणप्रागभावाधिकरणत्वस्याव्यवहितपूर्वत्वपदार्थस्य निवेशयितुमशक्यत्वात्, नित्येच्छाधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावाधिकरणतायाः सर्वेषु क्षणेषु सत्त्वेन सत्यन्ताप्रसिद्धेः, सर्वेऽपि हि क्षणा नित्येच्छाधिकरणीभूता इति तेषां यथायथं प्रागभावाधिकरणताऽपि सर्वत्र । सत्यन्तानुपादाने त्वस्मदादीच्छाधिकरणक्षणप्रागभावाधिकरणक्षणवृत्तित्वस्य चिरन्तनज्ञानेष्वपि सत्त्वादतिप्रसङ्गः । तस्मान्निरुक्तस्येच्छानिष्ठोत्तरत्वस्य निरूपकं यज्ज्ञानं तद्विषयत्वमिच्छाया विषये सम्बन्धः, एवं कृतिनिष्ठोत्तरत्वनिरूपकेच्छानिष्ठोत्तरत्वनिरूपकज्ञानविषयत्वं कृते विषये

---

* अत्र पृष्ठे टीकायां 'उपाधिभावा'दिति प्रतीके अभाववृत्तित्वं स्यादित्यत्र समवायवृत्तित्वं स्यादिति पाठः । § इतोऽग्रे 'कुण्डसमवायित्वस्य च बदरे' इत्यत्र 'बदरसमवायित्वस्य च कुण्डे' इति पाठः ।

† इतः पूर्वपृष्ठे टीकायां चरमपङ्क्तौ तदाधारत्वमित्यत्र 'आद्ये तदाधारत्व'मिति प्रतीकं पठनीयम् ।

‡ ५६४ पृष्ठे टीकायां प्रथमपङ्क्तौ विषयावैलक्षण्ये इत्यत्र विषयवैलक्षण्ये इति पाठः ।

सम्बन्धः। तादृशक्षणवृत्तीच्छेति। उक्तध्वंसोत्पत्तिक्षणवृत्तीच्छेत्यर्थः। तदधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वं कृतौ।

मूलपृष्ठम् ५६५–विशिष्टस्य धर्मान्तराभिन्नत्वोक्ताविति। तदीयत्वं धर्मान्तरमिति समानविभक्त्यन्तनामद्वयमहिम्ना तदीयत्वस्यैव विशेषणीभूततत्पदार्थस्यापि धर्मान्तराभेद इत्येव मूले वाच्यत्वेऽप्यनादराद्विशेषणविशेष्यभावव्यत्यासेनोक्तं धर्मान्तरस्य विपर्येणाभेद इतीति भावः।

मूलपृष्ठम् ५६७–सम्पादनसम्भवेनेति। विशेष्यतायामित्यादिः। विलक्षणावच्छेदकतेति। संसर्गविधया वैलक्षण्यम्।

मूलपृष्ठम् ५६८–अपूर्वत्वाच्चेति। अनधिगतत्वाच्चेत्यर्थः। तथा च पदार्थोपस्थितेर्वाक्यार्थाविषयकत्वेन न तद्द्वारकोऽपि सन्निकर्षस्तत्रेति भावः। उक्तदोषादेवेति। विषयेऽतिव्याप्तेरित्यर्थः।

मूलपृष्ठम् ५६९—ननु प्रवृत्तिनिवृत्त्यभावरूपोपेक्षाया ज्ञानजन्यत्वं कथमुक्तम्, प्रागभावात्यन्ताभावयोरनादित्वात्, तत्राह जन्यतां क्षैमिकसाधारणीमिति। व्याख्यानं तु भ्रान्तिविजृम्भितमिति। प्राभाकरमते विषयसामान्ये ज्ञानभिन्नत्वाभावाभिधानेऽपसिद्धान्तात्, कारिकायां पूर्वापरस्वारस्याच्च 'पृथक्त्व' इत्यतोऽस्मदुक्तार्थस्यैव प्रतीतेश्चेति भावः।

मूलपृष्ठम् ५७२–ननु विशिष्टं स्वीयविशेषणतानिरूपितेति। इदं यत्पदार्थान्वयि। नामग्राहमिति। द्वितीयायां चेतिणमुल्। परीप्साऽपरपर्यायत्वरायां हि सः, सा चात्र शक्या विवक्षितुम् 'अनुदात्तं पदमेकवर्जम्'इत्यत्रेवेति भावः। एवं विशेष्यत्वस्यापीति। सर्वान्तर्गतत्वापत्तिरित्यनुषज्यते।

मूलपृष्ठम् ५७७–संशयाभावस्य कार्यसहवर्तित्वेन हेतुत्वसिद्धिं विनेति। तादृशहेतुत्वसिद्धौ हि संशयाद्यक्षणे संशयाभावस्याभावेन विशिष्टनिश्चयोत्पत्त्यापत्त्ययोगेन तादृशापत्तिवारणमात्रफलकस्य संशयसामग्रीप्रतिबन्धकतापक्षस्य हेयत्वमिति भावः।

मूलपृष्ठम् ५८० *—सप्तपदार्थ्यामित्युचितं स्यादिति। अत्र यद्वक्तव्यं तत्प्रागुदीरितम्। अत्रापि स्वात्मनीति। अत्रापि=भेदस्य जातित्वपक्षेऽपि।

मूलपृष्ठम् ५८७–घटोऽयमिति प्रतीतिमादायाव्याप्तिरेवेति। भिद्यमानस्वरूपस्य घटस्यैकरूप्येणैव प्रतीतेरिति भावः।

मूलपृष्ठम् ६२०–परकीयस्वीकारनिश्चयादिति। ननु वस्तुतः स्वीकारस्याभावेऽपि तज्ज्ञापनसम्भवेन कथायां प्रतिवादिवचोमात्रेण न तदीयस्वीकारनिश्चयसम्भवः, निश्चितेऽ-

---

* ५८१ पृष्ठे टीकायां शून्यमिति प्रतीके 'तस्यापि पटत्वरूपभेदत्वे'त्यत्र 'तस्यापि पटत्वरूपभेदे'ति पाठः। ५८३ पृष्ठे टीकायां चौरेति प्रतीकात् प्राक् स्वरूपाद्यन्यतमस्येत्यत्र स्वरूपाद्यन्यस्येति पाठः।

१ टीकायमत्र 'द्वौ घटा' विति मुद्रितः पाठोऽशुद्धः, एवमेतदुत्तरपङ्क्तौ 'अयं घट इत्यादि' इत्येतत्स्थाने 'द्वौ घटावित्यादि' इत्येव शुद्धः पाठः।

पि च यदिशब्दपर्यायचेच्छब्दप्रयोगः 'इजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः। शास्त्राणि चेत्प्रमाणं स्युः प्राप्तास्ते परमां गतिम्' ॥ इति श्लोके शाबरभाष्ये [ अ० ५ पा०२ सू० २३ ] उदाहृतः, आहार्यसंशयमादाय चेदयं प्रयोगस्तर्हि प्रकृतेऽप्येवमेवास्तु, इत्यत आह भवतु वेति।

मूलपृष्ठम् ६२६–अनुमानच्छाययैव दूषणप्रवृत्तेरिति। प्रतिबन्द्याः प्रसङ्गरूपत्वे हेतुरयम्। निश्चयेन वेति। निवर्तते इत्यनुषङ्गः।

मूलपृष्ठम् ६३१—आरोपत्वं त्वाहार्यनिश्चयत्वमिति। अनुमितावतिव्याप्तिवारणायाहार्यत्वं विवक्षितम्, निश्चयत्वोक्त्या च भ्रमत्वनिवेशो व्यावर्त्यते, तत्फलं चानुपदं परतो व्यक्तम्। मूले अपसिद्धान्तविरोधादिष्वित्यत्रापसिद्धान्तसान्निध्यात्प्रतिज्ञाविरोधो विरोधपदेनोपादेयः। वस्तुतस्तु विरोधहेत्वाभासस्थलेऽपि तर्कलक्षणगमनागमनचर्चा समानैव, यदि सा वन्ध्या स्यान्माता न स्यादितिवद्यदि शब्दो नित्यः स्यात्कृतको न स्यादिति प्रसङ्गसम्भवात्, हेतुस्वरूपालोचननिबन्धनतायाः प्रसङ्गेऽविशेषकत्वात्। न चैवं हेतुस्वरूपालोचनेन प्रसङ्गः कथञ्चिद्व्यभिचारादिस्थलेऽपि सम्भवतीत्यादिपदेन प्रतिज्ञाहानिरेव किमिति गृहीतेति वाच्यम्, व्यभिचारादेः स्थले तमनुद्भाव्यानिष्टप्रसञ्जनस्य विलम्बितसामग्रीकत्वेन तदुद्भावनस्यैवौचित्यानुचिन्तनात्, अपसिद्धान्तादिस्थले तु यदीत्थं स्वीकुर्या नैयायिकत्वाभाववान् भवेरित्याद्युद्भावनस्याविलम्बितसामग्रीकत्वात्, तदिदं ध्वनयन्नाह शारदायां वस्तुतस्त्वापातत इदम्–तत्र प्रसङ्गेत्यादिना।

मूलपृष्ठम् ६३४—व्याहन्यमानयोरपि समावेशरीतिरिति। इयं द्वितीयपरिच्छेदे प्रतिज्ञाविरोधखण्डने चरमपङ्क्तिशारदायां द्रष्टव्या। अगवात्मतानियता यत इत्यतो यत इत्याकृष्याह यतोऽयं गौरिति। योजनेयं सम्भवाभिप्रायेण व्याप्तिद्वयलाभलोभेन च द्रष्टव्या, गोत्वस्य महिषत्वाभावात्मकमहिषभेदव्याप्यत्वं हि प्रथमवाक्यतो महिषत्वस्य गोत्वाभावात्मकागवात्मताव्याप्यत्वं तु द्वितीयवाक्यतो लभ्यते। परस्पराभावव्याप्यत्वं हि विरोधपदार्थः। ग्रन्थस्वरसतस्तु यतो महिषात्मताऽगवात्मतानियता ततो गौर्महिषो न भवतीत्येवं साधीयसी योजना।

मूलपृष्ठम् ६३६–चक्रकदोषवत्तया सम्प्रतिपन्नस्थलाद्यदि दुःखजन्मादिसूत्रोक्तेषु व्यक्तिभेदस्य विशेषकत्वं स्यात्, तदा तदभावश्चक्रकस्य दोषताप्रयोजकरूपे विशेषणतया दर्शयितुं शक्येत न त्वेवमिति 'विशेषव्यतिरेकदर्शनदुःशकत्वं चेति' मूलार्थं मनसि निधायावतारयति ननु चक्रकस्येति।

मूलपृष्ठम् ६३७–भेदोपचारेण षष्ठीति। मूले द्वारेति तृतीयान्तम्।

मूलपृष्ठम् ६४६—मूले पठितीति। पठितमनेनेत्यर्थे 'इष्टादिभ्यश्चे'ति सूत्रेणेनिः, तद्योगे 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यान' मित्यनेनास्मिन्नित्यत्र सप्तमी। ग्रन्थे खेलनं त्वनायासं निर्विचिकित्सा विपर्यस्तार्थप्रतिपत्तौ पर्यवस्यति, तदनुकूलव्यापारस्तु भावप्रत्ययान्तपठितशब्देन प्रकृते लब्धुमुचितः। इत्यादिकं स्पष्टमित्यवगत्य तु टीकायां नोक्तम्।

मूलपृष्ठम ६४७–न तु साक्षात्कारत्वेन गौरवादिति। साक्षात्करोमीतिप्रतीतिसाक्षि-

कविषयिताविशेषस्य ज्ञानत्वमपेक्ष्यानुगतत्वम्। ज्ञानाकरणकज्ञानत्वादिरूपं तु साक्षात्त्वं ज्ञानत्वघटितमेव। परन्तु शाब्दबोधस्यापि स्थलविशेषे साक्षात्त्वोपगन्तृवेदान्तिविशेषनये ज्ञानाकरणकज्ञानत्वं तत्राव्याप्तमित्यन्यत्।

मूलपृष्ठम् ६४८—यो यद्व्यामिश्रिततयैवेत्यादि। यत्र तदविषयकज्ञानविषयतायोग्यत्वाभावस्तत्र तदभेद इत्यर्थः। विस्तरस्तु दर्शनसर्वस्वे विज्ञानवादे दर्शितः। आपतेदिति। यादृशं तन्मतं प्रसिद्धम्, तदनुरोधेनात्रापत्तिरुपन्यस्ता। निष्पीडितविचाराश्रयणे तु द्वयोर्मतयोरैक्यमेव पर्यवस्यतीति निष्पक्षपातं प्रपञ्चितं दर्शनसर्वस्वे। दृष्टान्तासाङ्गत्यमिति। यद्यपि विभक्ताकारप्रतीतेर्विभिन्नदेशस्थत्वनिबन्धनत्वेन विभागो न कश्चिदन्यो भाव इति तमादाय शङ्काऽत्रोत्थाने नैव पराहता, तथापि कथञ्चिदापाततस्तदभ्युपगमेऽपि महाप्रलयवृत्तेस्तन्नाशस्य परमाणुस्वरूपत्वेऽद्यापि व्यवह्रियमाणता स्यात्, परमाणोः सत्त्वात्। अथ महाप्रलयकालवृत्तित्वविशिष्टपरमाणुस्वरूपतोपगमे नायं दोष इति चेत्, तथापि विभागविशेषनाशस्यातिरिक्ततोपगमे गौरवादेव परमाणुस्वरूपता स्वीकृता, न च गौरवलाघवयोः प्रमाणत्वम्, किन्तु प्रमाणानुग्राहकत्वमिति तदनुग्राह्यं प्रमाणमुपन्यस्यताम्, न च तदुपन्यासः शक्यः। प्राभाकरमताश्रयणे च महाप्रलयपर्यन्तं धावनं विफलम्, अद्यापि परमाणुषु जायमाननाशानां परमाणुस्वरूपत्वेन जन्यस्यापि नाशस्य नित्यात्मकतोदाहरणानामानन्त्यात्। वस्तुतस्तु प्राभाकरमतेऽपि यावदधिकरणसत्त्वं नाशव्यवहारवारणाय शृङ्गग्राहिकया तत्तत्कालविशिष्टाधिकरणस्वरूपताया वाच्यत्वे प्राप्ताप्राप्तविवेकन्यायेन तत्तत्कालसम्बन्ध एव नाशात्मकता पर्यवस्यतीति कथं नाशस्य नित्याधिकरणस्वरूपत्वम्, एवमभावः प्रकाशरूपं ज्ञानमेवेति प्राभाकरपक्षेऽपीत्यलं विस्तरेण। पञ्चमप्रकारतापक्ष एव चेति। ईदृशपक्षस्य बुद्ध्यारोहणानुपपत्त्याऽनास्थायां वाकारः। अधिकं तु दर्शनसर्वस्वशेषे तद्राजहंसे च दर्शितम्।

मूलपृष्ठम् ६४६—ग्रस्तमिति। नव्यन्यायाध्येतृदृष्ट्येति भावः।

तीर्णोऽयं शारदार्णव इति। व्याख्यातपूर्वमिदं प्रत्यक्षखण्डनशारदान्ते। इत्यों तत् सत्। इति द्वितीयतृतीयतुर्यपरिच्छेदेषु खण्डनशारदायां राजहंसः।

चेत्यैरेवं विनिर्मुक्ता तन्वा विकचिता चिता।  
मानमेयपदातीता मन्यतां परमा रमा ॥ ३१ ॥  
यच्चित्तरोधनधनैर्मुनिभिर्न जुष्टं  
नासीत्त्वनन्यशरणेश-रणेषु नष्टम्।  
द्वैतस्य तस्य विलये विलयो मतीनां  
यासां पुनन्तु शिवदाः शिव-दायगास्ताः ॥ ३३ ॥

सेवां श्रीशारदाया अकपटमनसा साधु सम्पाद्य पूत-  
आस्थां दृश्ये विलुम्पन् प्रसृमरयशसां वासनाशून्यसंवित्।  
ध्याने बद्धादरोऽयं स्तुतपरमगुरुर्योगिनीराजहंसो-  
ब्रह्माकाशे रिरंसुः परशिवनुतयैवाशिषा लालनीयः ॥ ३४ ॥

यत्नेनोपार्ज्यमानोऽपि माऽस्तु कश्चिद् गुणो मयि ।
तथापि नैव खिद्येऽहममेया मे गुरौ गुणाः ॥ ३५ ॥
विश्वोत्तीर्णपराहन्तापरा[1] क्रमैकमूर्तये ।
शिवयोरुत्सवायाऽस्तु कृतिरेषा समर्पिता ॥ ३६ ॥
केनापि सिद्धगिरिणा प्रथिताभिधाने
स्थाने दयाङ्घ्रिललिताऽऽहृतसन्निधाने ।
स्थित्वा समाः सुविषमा नगरे स्मरारे—
र्ग्रन्था मया विरचिता मननीयमार्गे ॥ ३७ ॥
चिरं स्वार्थलवास्पृष्टमहानन्दाख्यवर्णिना ।
रचितस्य यतेः सन्तु कृतयोऽमूः सतां मुदे ॥ ३८ ॥

इति कवितार्किकचक्रचूडामणिश्रीश्रीहर्षप्रणीतखण्डनखण्डखाद्यस्य शङ्करचैतन्यभारतीप्रणीतशारदाख्यव्याख्याया-स्तत्समानकर्तृकं राजहंसनामकं मानसोन्मीलनम् ।

श्रीपरशिवार्पणमस्तु ।

---

१ पराहन्ता = पूर्णचैतन्यम्, तस्याः पराक्रमः = परानन्दघूर्णिगर्भं नवनवविलासोल्लासन-शीलं स्वातन्त्र्यम्, अयञ्चोत्सव एव पारमेश्वरः, पराख्यबीजमन्त्रविशेषस्य स्फारात्मा क्रमोऽपि च न नोत्सवः, संवित्स्फारस्यैवोत्सवपदार्थत्वात् । ॐ तत्सत् ।

खण्डनखण्डखाद्यशारदा

शारदाराजहंसः ।

दर्शनसर्वस्वं राजहंससमेतम्

एतेषां प्राप्तिस्थानम् —

सन्न्यासिसंस्कृतकालेजमन्त्री, ढुण्ढीराजगणेश ।

अपारनाथमठ, बनारस सिटी ।

काशीस्थापणेभ्योऽपि प्राप्यन्ते ।